ओड्लमने इत्युपाह्व वेदांतरत्न पांडुरंग शास्त्रिणां पुत्रैः
कमलाकर शास्त्रिभिः कृतानि

# बोधायनानां बहून्याह्निक कार्याणि।

पुस्तककर्तृभिः इदं पुस्तकं कारवार महम्मडन मुद्रणालये
मुद्रयित्वा प्रकाशितं।



प्रथमावृत्तिः ] [ मूल्यं रूप्यकद्वयम्

## विषयानुक्रमः ॥

# ? स्तावन..

## प्रयोगमाला ग्राह्या।

(१) सूत्रेभ्योऽनुकूलः कोपि उत्तमप्रयोगोयद्यस्ति तर्हि एतत्सूत्रेभ्योऽसौ उत्तमप्रयोगोऽतीव उपयोगयुक्तः। कुतश्चेत् यदि सामान्य ब्राह्मणाः सूत्राणि लभंते तर्हि ते तैः सूत्रैः प्रयोगं रचयितुं न शक्नुवंति। प्रयोगरचनाय वैदिकपरंपराया बहुशास्त्राध्ययनस्य च प्रयोजनानि संति। अतः सूत्रभ्योऽनुकूलः कोप्युत्तमप्रयोगो यद्यस्ति तर्हि एतत्सूत्रभ्योऽसौ उत्तमप्रयोगः अतीव उपयोगयुक्तः।

(२) स्वलिखितप्रयोगमालायां वेंकटेशभट्टाः। नमो बोधायनायास्तु सर्वज्ञाय महात्मने। शेषोखिलार्थ विद्यस्य स्मृतः सर्वार्थ बोधकः॥ ज्योतिः शास्त्रं धर्मशास्त्रं कारिकां सूत्रमेव च। प्रयोगांश्च समालोक्य बोधायनहितायच॥ प्रयोगमाला क्रियते॥ अथाह्निकप्रयोगः॥ अथ बोधायनानां अहरनुष्ठेयमाह्निक बोधायनकल्पसूत्र धर्मशास्त्रं च विचार्य संक्षेपेणोच्यते। भट्टलिखितैः एतच्छ्लोकैः एतद्वाक्यैश्च वयं एवं बोधामः। भट्टलिखित प्रयोगस्य नाम प्रयो माला। एषा प्रयोग माला बोधायनानां कृत अस्ति। अस्यां षोडशसंस्कारादि प्रयोगाः संति। अस्यां बहूनि शास्त्रवचनानि वर्तते। अतः प्रयोगकार वेंकटेश भट्टाः शास्त्रपारंगतश्रोत्रिया इति स्पष्टम्। प्रयोगमाला बोधायनानां वेदविद्याः तेषांच धर्मशास्त्राचार विचारान् दर्शकः सूत्रं समालोक्य लिखितः अत एव सूत्रभ्यो नुकूलः अस्मदज्ञातवर्षसंख्यायाः प्राक् लिखितः उत्तमप्रयोगः। प्रयोगमालाया भेदरहितोऽन्यग्रंथोऽधुनापि न प्रसिद्धः। प्रयोगमालया समः अन्यग्रंथोऽधुनापि न प्रसिद्धत्वात् एकदा प्रयोगमाला मुद्रणयंत्रे मुद्रितत्वात् शास्त्रपारंगतश्रोत्रियैश्च लिखितत्वात् प्रयोगमालाग्राह्या।

## विदुषां परस्परभिन्नप्रतिपादनानां कारणानि।

कचिदेवं भवति। विद्वांसः तदेव विषयमुद्दिश्य यदा पुस्तकानि लिखंति तदा तेषां पुस्तकेषु तद्विषयस्य तेषां परस्परभिन्नप्रतिपाद

नानि दृश्यंते। एतस्य कारणे एवं। तेषां तेषां विदुषां विद्या विद्या-ज्ञानं च। पुस्तकानि लिखितेषु विदुषु विद्यायाः तुल्यप्रमाणं विद्या ज्ञानस्य च तुल्यप्रमाणं नवर्तेते। तयोः विषमप्रमाणे वर्तेते। भेदाना मेतदेकं कारणं। कैश्चिद्विद्वद्भिः आत्मनां ग्रंथरचनप्रमाणाय कानिचि च्छास्त्रपुस्तकानि लभ्यंते। अन्यद्भिः तान्येव शास्त्रपुस्तकानि नलभ्यंते। भेदानामेतदपरं कारणं। किंतु तैः सर्वैः उचितानि शास्त्रपुस्तकान्येव प्रयोज्यानि।

## अन्यपक्षाणां भेदवादग्रहणानि।

प्रयोगमालाया भेदरहितत्वेन तद्गतमंत्रान् आचारविचारांश्च प्रति-पादकाः तद्ग्रंथकर्तारः वेंकटेशभट्टाः अधूना न संति। अतः प्रयोग मालाभिमानिभिः तदनुष्ठितैः पंडितैः अन्यपक्षाणां भेदवादग्रहणानि अनुचितानि। अधुना प्रयोगमालायाः भेदरहितत्वेन तद्गतमंत्रान् आचार विचारांश्च प्रतिपादका विद्वांसो यदि संति तदा ते भेदवादान्गृह्णीयुः।

## बोधायनानां बहून्याह्निककार्याणि।

वेंकटेशभट्टैः स्वलिखितप्रयोगमालायां बोधायन ब्राह्मणानामाह्निक प्रयोगो दत्तः। आह्निक प्रयोगः बोधायन कल्पसूत्रं धर्मशास्त्रं च विचार्य लिखितः। वयं तदाह्निक प्रयोगाद्बहु विषयान्गृहीत्वा तद्गत दुर्गम प्रसंगान्सुलभशब्दैः कथयित्वा अस्माभिः बोधायन ब्राह्मणानां बहून्याह्निक कार्याणि लिखितानि। परं केषुचिदाह्निक कार्येषु बहु दुर्गमप्रसंगा एव स्पष्टीकृताः। तथापि अस्मल्लिखित बहून्याह्निक कार्याण्युद्दिश्य प्रयोग मालाया अखिला योग्य प्रयोगा उद्धृत्य अत्र प्रयुक्ताः। एष्वखिल प्रयोगेष्वपि एकस्यैवाह्निक कार्यस्य असमग्र प्रयोगोत्र प्रदत्तः। अस्मत्पु-स्तके केभ्यश्चित्कार्येभ्योऽस्मभिः संख्याक्रमः न दत्तः। भस्मधारण विधि वेदशास्त्राद्यभ्यासतांबूल भक्षणे तिहास पुराणाद्यभ्यासादीन्यापि आह्निक कार्याणि। एतेभ्यः (१) (२) (३) (४) एवंविधः संख्याक्रमः अस्माभिः न दत्तः। तेषां संख्याक्रमाभावोऽपि तानि अनुष्ठेयानि आह्निककार्याणि। भस्मधारणं अवश्य कुर्यात्। तत्कृतं चेत् पूतो भवति दशपूर्वान्दशाप रानात्मानं चैकविंशतिं पंक्तिं पुनाति ब्राह्मणः सायुज्य गुँ सलोकता-माप्नोति। प्रयोगकारः प्रयोगमालायां अस्मल्लिखिताह्निककार्यैः समेषु

स्वलिखिताह्निककार्येषु कांश्चिन्मंत्रान् अखिलान् न दत्वा तन्मंत्राणां पठनं कुर्यादिति केवलं सूचितत्वात् अस्माभिः इदानींतनकाल बोधायन ब्राह्मणानां तन्मंत्राभ्यासपद्धतिना तन्मंत्राः अखिलाः अस्मत्पुस्तके दत्ताः। बोधायन शब्दस्यार्थः बोधायन सूत्रकारः बोधायन ब्राह्मणो वा। अस्माभिर्लिखितानामाह्निक कार्याणां प्रमाणं प्रयोगमाला। अतः यदा एतदाह्निक कार्याणि ये पठंति तदा यदि ते संशयस्था भवेयुः ततः प्रयोगमालां सम्यग्निरीक्ष्य संशयनिवृत्ता भवेयुः।

श्रोत्रियान्यपंडितानां संमतिः।

काव्यनिपुणपंडितानां संमतविषयाः प्रयोगमालायां संतीति वयं किंचिद्बोधामः। शिवानंदलहरीनाम काव्यमस्ति। एतत्काव्यकृतशिवस्तुतिः प्रयोगमालायाः शिवपूजया किंचिदंशेषु सदृशास्ति। शिवानंद लहरी श्लोकाः।

किंचित्कालमुमामहेश भवतः पादारविन्दार्चनैः
किंचिद्ध्यानसमाधिभिश्च नतिभिः किंचित्कथावर्णनैः॥
किंचित्किंचिदवेक्षणैश्च नुतिभिः किंचिद्दिनेष्वीदृशं
यः प्राप्नोति मुदा त्वदर्पितभरो जीवन्समुक्तः खलु॥१॥
जननमृतयुतानां सेवयादेवतानां
न भवति सुखलेशः संशयो नास्ति तत्र॥
अजनिममृतरूपं सांबमीशं भजंते
य इह परम सौख्यं ते हि धन्या लभंते॥२॥
शिव तव परिचर्या संविधानापवर्यां
भव मम गुणधुर्यां बुद्धिकन्यां प्रदास्ये॥
सकल भुवनबंधो सच्चिदानंदसिंधो
सदयहृदयगेहे सर्वदा संवसत्वं॥३॥

एवं। एतत्काव्याय श्रीशाधिराज कलशांबुधिपूर्ण चंद्र पृथ्वीपाल प्रोत्साहित श्रीवेगसुधीविरचितं व्याख्यानमप्यस्ति।

श्री शालिवाहन शक
१८६८
व्ययसंवत्सर वैशाख शुद्ध १०
अंकोला पत्तनम्

प्रस्तावनालेखकाः
ओडुमने इत्युपाह्वकमलाकर शास्त्रिणः

॥ श्रीः ॥

# बोधयनानां बहून्याह्निककार्याणि ।

## भस्मधारण विधिः ।

भस्मधारणं दिनस्य प्रथमभागे कुर्यात् । भस्मधारण मंत्राः । सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवे भवे नातिभवे भवस्वमां भवोद्भवाय नमः ॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमोरुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्व भूतदमनाय नमो मनोन्मनाय नमः ॥ अघोरेभ्यो थघोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्व शर्वेभ्यो नमस्ते अस्तुरुद्ररूपेभ्यः ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नोरुद्रः प्रचोदयात् ॥ ईशानः सर्वविद्यानां ईश्वरः सर्वभूतानां ब्रह्माधिपति ब्रह्मणोधिपति ब्रह्माशिवोमेऽस्तु सदाशिवोम् ॥ ( इत्यभिमंत्र्य ) ॥ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनं उर्वारुकमिवबंधनात् मृत्योर्मुक्षियमामृतात् ॥ अग्निरितिभस्म ॥ जलमिति भस्म ॥ स्थलमिति भस्म ॥ व्योमेति भस्म ॥ सर्वगुँ हवा इदं भस्म ॥ मनइत्येतानि चक्षुषि भस्मानि ॥ इति अंगानि संमृज्य मध्यमानामिकांगुष्ठैः भस्मना त्रिपुंड्रं ललाटे हृदि दोर्द्वंद्वे गले कुक्षौ शिरसि कुर्यात् ॥ इति भस्मधारण विधिः ॥ अयं विधिः न प्रातःसंध्यांतर्गत विषयः । अयं प्रातःसंध्यायाः भिन्नः । इदमाह्निककार्यं आदौ कृत्वा पश्चात् प्रातःसंध्यां कुर्यात् ।

## (१) प्रातः संध्या ।

गृहेवा नद्यादौवा प्रक्षालित पाणिपादः बद्धशिखः यज्ञोपवीति प्राङ्मुख उपविश्य ॥ अपवित्रः पवित्रो वा सर्वावस्थांगतोपि वा । यः स्मरेत्पुंडरीकाक्षं स बाह्याभ्यंतरः शुचिः ॥ इति विष्णुस्मरणं कृत्वा ॥ ओँ ऋग्वेदाय स्वाहा ॥ यजुर्वेदाय स्वाहा ॥ सामवेदाय स्वाहा ॥ इति त्रिवारं जलंपीत्वा हस्तं प्रक्षाल्य जलं स्पृष्ट्वा प्रतिस्थानं अभिमृशति । सजलेन अंगुष्ठमूलेन अथर्ववेदाय नमः इत्युत्तरोष्ठं परिमृजेत् इतिहासपुराणेभ्यो नमः ॥ इत्यधरोष्ठं ॥ अग्नयेनमः इति

पाणिना मुखमवाङ्मृजेत् ॥ नक्षत्रेभ्यो नम इति वामपाणिमभ्युक्ष्य विष्णवे नम इति पादावभ्युक्ष्य सूर्याय नमः चंद्रमसे नमः इत्यंगुष्ठा नामिकाभ्यां दक्षिण वामनेत्रे संस्पृशेत् ॥ प्राणायनमः अपानायनमः इत्यंगुष्ठतर्जनीभ्यां नासिके दिग्भ्यो नमः दिग्भ्यो नमः इत्यंगुष्ठकनिष्ठिकाभ्यां दक्षिणवामकर्णौ ॥ इंद्राय नमः इत्यंगुष्ठमध्यमाभ्यांबाहू ॥ पृथिव्यै नमः इति पादौ ॥ अंतरिक्षाय नम इति जानुनी ॥ दिवे नम इति गुह्यं ॥ ब्रह्मणे नमः इत्यंगुष्ठेन नाभिं ॥ रुद्राय नम इति पाणितलेन हृदयं ॥ शिवाय नम इति सर्वाभिरंगुलिभिः शिरः ॥ सप्तर्षिभ्यो नम इति सर्वाभिः शिखां स्पृशेत् । एवं सर्वत्र सजलहस्तेन स्पृष्ट्वा ॥ एवमेव पुनराचम्य ॥ प्राणायामं कुर्यात् ॥ यथा ॥ ॐ भूर्भुवस्सुवः ॥ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो योनः प्रचोदयात् ॐ ॥ आपोज्योति रसोमृतं ब्रह्म भूर्भुवः सुवरों ॥ इति मंत्रः ॥ वामनासिकया वायुं आपूर्व अंगुष्ठ कनिष्ठानामिकाभिर्नासिकां पीडयित्वा श्वासं नियम्य मंत्रं कुंभके त्रिर्जपित्वा ततः दक्षिणेन श्वासं रेचयेत् ॥ ( कुंभके श्वासनियमनकाले ॥ आपोज्योतिरसोमृतंब्रह्म भूर्भुवः सुवरों ॥ इदं गायत्रीशिरः ) ॥ इति प्राणानायम्य ॥ ममोपात्त दुरित क्षयद्वारा श्रीपरमेश्वर प्रीत्यर्थं प्रातः संध्यामुपासिष्ये ॥ इति संकल्प्य ॥ मार्जनं कुर्यात् ॥ यथा ॥ ॐ आपोहिष्ठामयो भुवः ॥ तान ऊर्जे दधातन ॥ महेरणाय चक्षसे ॥ इति पादयोः ॥ ॐ योवः शिवतमो रसः ॥ तस्य भाजयते हनः ॥ उशती रिव मातरः ॥ इति मूर्ध्नि ॥ ॐ तस्मा अरंगमामवो ॥ यचक्षयाय जिन्वथ ॥ आपोजनयथाचनः ॥ इति हृदये ॥३॥ ॐ आपोहिष्ठामयो भुवस्तान ऊर्जे दधातन ॥ महेरणाय चक्षसे ॥ इति मूर्ध्नि ॥ ॐ योवः शिवतमो रसस्तस्य भाजयते हनः ॥ उशतीरिव मातरः ॥ इतिहृदये ॥ ॐतस्मा अरंगमामवो यचक्षयाय जिन्वथ ॥ आपोजनयथाचनः ॥ इति पादयोः॥६॥ ॐआपोहिष्ठामयो भुवस्तान ऊर्जे दधातन ॥ महेरणाय चक्षसे॥ इति हृदये ॥ ॐ योवः शिवतमोरसस्तस्य भाजयते हनः ॥ उशतीरिव मातरः ॥ इति पादयोः ॥ ॐतस्मा अरंगमामवो यचक्षयाय जिन्वथ ॥ आपोजनयथाचनः ॥ इति

शिरसि ॥९॥ इति नवविधमार्जयित्वा हस्तेन जलमादाय ॥ ॐ सूर्यश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षंतां ॥ यद्रात्रिया पापमकार्षं ॥ मनसा वाचा हस्ताभ्यां ॥ पद्भ्यामुदरेण शिश्ना ॥ रात्रिस्तदवलुंपतु यत्किंच दुरितं मयि ॥ इदमहं माममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥ इत्यपः पीत्वा ॥ पूर्ववद्द्विराचम्य ॥ द्वात्रिंशन्मार्जनं कुर्यात् ॥ यथा ॥ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभिनोमुखाकरत्प्रण आयूङ्षितारिषत् ॥ आपोहिष्ठामयो भुवस्तान ऊर्जे दधातन । महेरणाय चक्षसे ॥ शिरसि द्विर्मार्जयेत् ॥ योवः शिवतमो रसस्तस्य भाजयते हनः । उशतीरिव मातरः ॥ तस्मा अरंगमामवो यस्यक्षयाय जिन्वथ । आपोजनयथा चनः ॥ मुखे द्विः ॥ यच्चिद्धिते विशो यथा प्रदेववरुणव्रतं । मिनीमसिद्यविद्यवि ॥ यत्किंचेदं वरुण दैव्येजनेभिद्रोहं मनुष्याश्चरामसि । अचित्तीयत्तव धर्मायुयोपि ममानस्तस्मा देनसो देवरी रिषः ॥ ग्रीवायां द्वे ॥ कितवासो यद्रिरिपुर्नदीवि यद्वाघा सत्य मुतयन्नविद्म । सर्वानाविष्य शिथिरेव देवाथातेस्यामवरुणप्रियासः ॥ हिरण्य वर्णाश्शुचयः पावका यासुजातः कश्यपोयास्विंद्रः । अग्निया गर्भं दाधिरे विरूपास्तान आपश्शङ्स्योना भवंतु ॥ बाव्होर्द्वे ॥ यासाङ्राजा वरुणोयाति मध्ये सत्यानृते अवपश्यंजनानाम् । मधुश्चुत श्शुचयोयाः पावकास्तान आपश्शङ्स्योना भवंतु ॥ यासान्देवादिवि कृण्वंति भक्षंया अंतरिक्षे बहुधा भवंति । याः पृथिवीं पयसो दंति शुक्रास्तान आपश्शङ्स्योना भवंतु ॥ वक्षसिद्वे ॥ शिवेनमा चक्षुषा पश्यतापश्शिवया तनुवोपस्पृशतत्वचंमे । सर्वाङ् अग्नीङ् रप्सुषदो हुवेवो मयिवर्चो बलमो जोनिधत्त ॥ पवमानः सुवर्जनः । पवित्रेण विचर्षणिः । यः पोता स पुनातुमा ॥ हृदि द्वे ॥ पुनंतुमा देवजनाः । पुनंतु मनवोधिया । पुनंतु विश्वआयवः ॥ जातवेदः पवित्रवत् । पवित्रेण पुनाहिमा । शुक्रेण देवदीयत् । अग्नेक्रत्वा क्रतूङ्रनु ॥ नाभौद्वे ॥ यत्ते पवित्रमार्चिषि । अग्ने विततमंतरा । ब्रह्मतेनपुनीमहे ॥ उभाभ्यां देवसवितः । पवित्रेण सवेनच ।

इदं ब्रह्मपुनीमहे ॥ पार्श्वयोर्द्वे ॥ वैश्वदेवी पुनती देव्यागात् यस्यै वह्वीस्तनुवो वीतपृष्ठाः । तया मदंतः सधमाद्येषु । वयग्ङस्यामपतयोरयीणाम् ॥ वैश्वानरो रश्मिभिर्मा पुनातु । वातः प्राणनषिरोमयो भूः । द्यावा पृथिवीपयसा पयोभिः । ऋतावरी यज्ञियेमा पुनीताम् ॥ कट्योर्द्वे ॥ बृहद्भिः सवितस्तृभिः । वर्षिष्ठै र्देवमन्मभिः । अग्नेदक्षैः पुनाहिमा ॥ येन देवा अपुनत । येनापो दिव्यंकशः । तेन दिव्येन ब्रह्मणा । इदं ब्रह्मपुनीमहे ॥ गुह्योर्द्वे ॥ यःपावमानी रद्ध्येति । ऋषिभिस्संभृतग्ङरसं । सर्वग्ङसपूतमश्नाति । स्वदितं मातरिश्वना ॥ पावमानीर्यो अद्ध्येति । ऋषिभिस्संभृतग्ङरसं । तस्मै सरस्वती दुहे । क्षीरग्ङसर्पिर्मधूदकं ॥ ऊर्वोर्द्वे ॥ पावमानी स्स्वस्त्ययनीः । सुदुघाहि पयस्वतीः । ऋषिभिस्संभृतो रसः । ब्राह्मणेष्वमृतग्ङहितं ॥ पावमानीर्दिशंतुनः ॥ इमंल्लोकमथो अमुं । कामान्समर्धयंतुनः । देवीर्देवैस्समाभृताः ॥ जानुनोर्द्वे ॥ पावमानी स्स्वस्त्ययनीः । सुदुघाहिघृतश्चुतः । ऋषिभिस्संभृतो रसः । ब्रह्मणेष्वमृतग्ङहितम् ॥ येनदेवाः पवित्रेण । आत्मानं पुनंतसदा । तेन सहस्त्रधारेण । पावमान्यः पुनंतुमा ॥ जंघयोर्द्वे ॥ प्राजापत्यं पवित्रम् । शतोद्यामङ् हिरण्मयं । तेन ब्रह्मविदोवयं । पूतं ब्रह्मपुनीमहे ॥ इंद्रःसुनीति सहमापुनातु । सोमस्स्वस्त्या वरुणस्समीच्या । यमो राजा प्रमृणाभिः पुनातुमा । जातवेदा मोर्जयंत्या पुनातु ॥ पादयोर्द्वे ॥ ॐ भूः । ॐभुवः ॥ पादांगुलिषुद्वे ॥ ॐ ग्ङुं सुवः । ॐ भूर्भुवस्सुवः ॥ इति सर्वांगे द्वे ॥ इति द्वात्रिंशन्मंत्रैः द्वात्रिंशत्स्थानेषु क्रमेण मार्जयेत् ॥

अथार्घ्यं ॥ अर्घोत्थितः प्राङ्मुख एव कराभ्यां कृतेन अंगुष्ठवर्जितांजलिना जलमादाय नासाग्रे धृत्वा दक्षिणनासारंध्रेण आत्मनः तेजः तस्मिन्संयोज्य गायत्रीमंत्रमुक्त्वा ततः तज्जलं त्रिवारं ऊर्ध्वं जलमध्ये उत्क्षिपेत् ॥ ( अत्र संकल्पोच्चारःन विद्यते ) ॥ ॐ भूर्भुवस्सुवः । ॐ तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि । धियो योनः प्रचोदयात् ॥ एतद्गायत्रीमुक्त्वा जलं त्रिवारं ऊर्ध्वं उत्क्षिपेत् । ततः । ॐ आपोज्योतिरसोमृतंब्रह्म भूर्भुवस्सुवरोम् । इति गायत्री-

शिरसा अंकुशमुद्रया आत्मनः तेजः सूर्यमंडलादाकृष्य वामनासारंध्रेण मूलाधारे (नाभौ) संस्थापयेत् ॥ पुनः जलं गृहीत्वा तेजः संयोज्यतं मंत्रमुक्त्वा पूर्ववदूर्ध्वं क्षित्वा । स्वतेजः आत्मनि संस्थापयेत् । इति द्वितीयार्घ्यं । पुनरपि जलं गृहीत्वा तेजः संयोज्य मंत्रमुक्त्वा पूर्ववदूर्ध्वं क्षित्वा स्वतेजश्च आत्मनि संस्थापयेत् । इत्यर्घ्यत्रयंदत्वा । कालातिक्रमदोषश्चेत् चतुर्थार्घ्यं दद्यात् ॥ कालातिक्रमदोषपरिहारार्थं प्रायश्चित्तार्घ्यं करिष्ये इति संकल्प्य ॥ जलं गृहीत्वा तेजः संयोज्य । ॐ भूः भुवः सुवः महः जनः तपः सत्यं । ॐ तत्सवितुर्वरेण्यं । भर्गो देवस्य धीमहि । धियो योनः प्रचोदयात् ॥ ॐ भूः भुवः सुवः महः जनः तपः सत्यं ॥ इत्युक्त्वा जलं क्षिपेत् ॥ ॐ आपोज्योति रसोमृतं ब्रह्मभूर्भुवस्सुवरोम् ॥ इति स्वतेजः आत्मनि संस्थापयेत् ॥ ततः ॥ असावादित्यो ब्रह्मेति जलहस्तः प्रदक्षिणं कुर्यात् ॥ अपः स्पृष्ट्वा उपविश्य । द्विराचम्य दर्भासनेषूपविश्य (दर्भान् आसने निधाय) ॥ ऊर्ध्वकेशिविरूपाक्षिमांसशोणित भक्षिणे ॥ तिष्ठ देवि शिखाबद्धे चामुंडेह्यपराजिते ॥ इति शिखां बध्वास्त्रोपसंहारं कुर्यात् ॥ अस्य श्री अस्त्रोपसंहारमहामंत्रस्य ॥ ब्रह्माऋषिः गायत्रीछंदः सवितादेवता ॥ सोहमर्कः परंज्योति रर्कज्योति रहंशिवः ॥ आत्मज्योति रहंसूर्यः सर्वज्योति रसोमहों ॥ आवायव्ययावायव्या ॥ ययावायव्ययावायव्या ॥ और्वाययत्रा ॥ हरोसि पाप्मानं मे विद्धि ॥ उत्तिष्ठ देवि गंतव्यं पुनरागमनायच ॥ प्रविश्य देवि गायत्रीं प्रविश्य हृदयं मम ॥ इत्यंकुशमुद्रया सूर्यमंडलादस्त्रमाकृष्यस्वात्मन्युपसंहृत्य ॥ अंकुशमुद्रालक्षणं । ऋज्वीं मध्यमिकां कृत्वा तर्जनीं मध्यपर्वणी संयोज्या-कुंचयेत्किंचित् मुद्रेषांकुशसंज्ञिकेतिलक्षणम् ॥ इति मंत्रमहोदध्यां व्याख्याकारः । अपसर्पंतु येभूता येभूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्तारस्तेनश्यंतु शिवाज्ञया ॥ (अथ आसनं) । पृथिव्या मेरुपृष्ठऋषिः इति शिरसि ॥ सुतलं छंदः इति मुखे ॥ कूर्मो देवता इति हृदये ॥ आसने विनियोगः ॥ पृथ्वि-त्वया धृतालोकादेवित्वं विष्णुनाधृता ॥ त्वंचधारयमांदेवि पवित्रंकुरुचासनं ॥

कूर्मासनायनमः ॥ इत्यासनमभिमंत्र्य ॥ ( इति आसनं ) ॥ अपक्रामंतु भूताद्याः सर्वे ते भूतिभारकाः ॥ सर्वेषामाविरोधेन ब्रह्मकर्मसमारभे ॥ वामपादतले नाथ भूमिमास्फाल्येत्रिधा । सार्धतालत्रयेनाथ भूतमुच्चाटयेद्गुरु ॥ इति दक्षिण हस्तेन वामपदांगुष्ठं गृहीत्वा तत्पादपार्ष्णिना भूमिं त्रिरास्फालयेत् ॥ ॐ ऱ्हीं अस्त्रायनमः इति भूतमुत्सार्य ॥ ॐ ऱ्हींपरमात्माद्य शेषगुरुपारंपर्यक्रमेण स्वगुरुपादांबुजं यावत्तावत्प्रणोमि ॥ ॐ तीक्ष्णदंष्ट्रमहाकाय कल्पांत दहनोपम ॥ भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ गुं गुरुभ्यो नमः इति शिरसि ॥ गं गणपये नम इति दक्षिण बाहुमूले ॥ दुं दुर्गाय नम इति वामबाहुमूले ॥ ॐ क्षं क्षेत्रपालाय नम इति जानुनोः ॥ सं सरस्वत्यै नम इति नाभेरधः ॥ पं परमात्मने नम इति हृदये ॥ ॐ भूः इति पादयोः । ॐ भुवः इति जानुनोः । ॐ गुँसुव इत्यूर्वोः । ॐ मह इति जठरे । ॐ जन इति कंठे । ॐ तप इति मुखे । ॐ गुँ सत्यमितिशिरसि ॥ इति विन्यस्य ॥ प्रणवस्य परब्रह्मऋषिः इति शिरसि । गायत्री छंदः इति मुखे । सविता देवता इति हृदये ॥ ॐ तत्सवितुर्ब्रह्मात्मने अंगुष्ठिकाभ्यां नमः । वरेण्यं विष्ण्वात्मने तर्जनीभ्यां नमः । भर्गोदेवस्य रुद्रात्मने मध्यमाभ्यां नमः । धीमहि ईश्वरात्मने अनामिकाभ्यां नमः । धियोयो नस्सदाशिवात्मने कनिष्ठिकाभ्यां नमः । प्रचोदयात्सर्वात्मने करतलकरपृष्ठाभ्यां नमः ॥ ॐ तत्सवितु०ने हृदयाय नमः । वरेण्यं०ने शिरसे स्वहा । भर्गो०ने शिखायैवषट् । धीमहि०ने कवचायहुं । धियो योनः ०ने नेत्रत्रयाय वौषट् । प्रचोदन०ने अस्त्राय फट् ॥ ॐ भूर्भुवस्सुवरोमिति दिग्बंधः ॥ मंदाराव्हय रोचनां जनजपा खाभैर्मुखैरिंदुमद्रत्नोद्यन्मुकुटांशु संततचतुर्विंशार्ण चित्रातनुः । अंभोजेरिदराह्वयौ गुणकपालाख्यौच पाशांकुशेष्टाभीतिर्दधतीभवेद्भवभय प्रोत्सारिणी तारिणी । ॐ इत्येकाक्षरं ब्रह्म । अग्नि र्देवता । ब्रह्म इत्यार्षं । गायत्रं छंदं परमात्मं स्वरूपं । सायुज्यं विनियोगं । आयातु वरदा देवी अक्षरंब्रह्म संमितं । गायत्रीं छंदसां मातेदं ब्रह्मजुषस्वमे ।

यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यते । यद्रात्रियात्कुरुते पापं तद्रात्रियात्प्रति-
मुच्यते । सर्ववर्णे महादेवि संध्याविद्ये सरस्वति । ओजोसि सहोसि बलमसि
भ्राजोसि देवानां धामनामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभुरों ।
गायत्रीमावाहयामि सावित्रीमावाहयामि सरस्वतीमावाहयामि छंदऋषीनावाह-
यामि श्रियमावाहयामि ॥ गायत्रिया गायत्रीछंदो विश्वामित्रऋषिस्सविता देव-
ताग्निर्मुखं ब्रह्माशिरो विष्णुर्हृदय गुँ रुद्रः शिखापृथिवी योनिः प्राणापानव्यानो-
दानसमाना सप्राणाश्वेतवर्णा सांख्यायन सगोत्रा गायत्री चतुर्विंगुँ शत्यक्षरा
त्रिपदाषट्कुक्षिः पंचशीर्षोपनयने विनियोगः ॥ ( इति उदकंक्षित्वा ) ॥ ॐ
भूः ॐ भुवः ॐ गुँ सुवः ॐ महः ॐ जनः ॐ तपः ॐ गुँ सत्यं ॥
( इति उच्चारं कृत्वा ) ॥ ॐ भूर्भुवस्सुवः ॐ तत्सवितुर्वरेण्यं ॥ भर्गोदेवस्य
धीमहि ॥ धियो योनः प्रचोदयात् ॥ ॐ ॥ इति यथाशक्तिजपेत् । ( अत्र
गायत्रीजपविषये । याज्ञवल्क्यः । ॐकारं पूर्वमुच्चार्य भूर्भुवः सुवस्तथैवच ।
गायत्रीं प्रणवं चांते जप एवमुदाहृतः ॥ गायत्र्याः यथाशक्ति जपसमये केवलं
त्रिव्याहृतियुक्तां गायत्रीं यथाशक्ति जपेत् किंतु सप्तव्याहृतीः न यथाशक्ति जपेत्
इति एतेन याज्ञवल्क्यवचनेन व्यक्तं भवति ॥ यथाशक्तिजपेत् इत्यस्य अर्थः
अष्टसहस्रं अष्टशतं दशवारं वा जपेदिति । किंतु चतुर्थीसप्तमीत्रयोदशीप्रदोषेषु
दर्शेच दश संख्या । अनध्यायेषु अष्टाविंशतिः । सुदिने यथेष्टं जपेत् । प्रातः
संध्यायां सनक्षत्रादारभ्य आसूर्यदर्शनात् नाभिसमौकरौ कृत्वा तिष्ठन् जपेत् ॥
आपिच । ध्यायेत्तु मनसा मंत्रं जिव्हष्ठो न विचालयेत् । न कंपयेत् शिरोग्रीवं
दंतान्नेव प्रकाशयेदिति ॥ ) ॐ तत्सवितुर्ब्रह्मात्मने अंगुष्ठिकाभ्यां नमः । वरेण्यं
०ने तर्जनीभ्यां नमः । भर्गोदेवस्य ० मध्यमाभ्यां नमः । धीमहि ० अनामि-
काभ्यां नमः । धियोयो ० कनिष्ठिकाभ्यां नमः । प्रचोदया ० करतलकरपृष्ठाभ्यां
नमः । उत्थाय प्राङ्मुखःस्थित्वा हस्ताभ्यां स्वस्तिकं कृत्वा सूर्यमुपतिष्ठते ॥
मित्रस्य चर्षणी धृतः श्रवो देवस्य सानसिं ॥ सत्यं चित्र श्रवस्तमं मित्रो जनान्

यातयति प्रजानन्मित्रोदाधारपृथिवीमुतद्यां ॥ मित्रः कृष्टी रनिमिषाभिचष्टे सत्याय हव्यं धृतवद्विधेम ॥ प्रसमित्रमर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन ॥ न हन्यते न जीयते तो तो नैन मगुँ हो अश्नोत्यंति तोनदूरात् ॥३॥ ( अन्ये मंत्राः ) । उद्वयंतमसस्परिपस्यंतो ज्योति रुत्तरं । देवं देवत्रा सूर्यमगन्म ज्योति रुत्तमं ॥४॥ उदुत्यं जातवेदसं देव वहंति केतवः । दृशे विश्वाय सूर्यं ॥५॥ चित्रं देवानां उदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ॥ आप्रा-द्यावापृथिवीअंतरिक्षगुँ सूर्य आत्मा जगतस्तस्थुषश्च ॥६॥ इतिषड्भिः सूर्य मुपस्थाय दिश उपतिष्ठते । नमः प्राच्यै दिशे याश्चदेवता एतस्यां प्रतिवसं-त्येताभ्यश्च नमो नमो दक्षिणायै दिशे याश्च देवता एतस्यां प्रतिवसंत्येताभ्यश्च नमो नमः प्रतिच्यै दिशे याश्चदेवता एतस्यां प्रतिवसंत्येताभ्यश्च नमो नम उदीच्यै दिशे याश्च देवता एतस्यां प्रतिवसंत्येताभ्यश्च नमो नम ऊर्ध्वायै दिशे याश्च देवता एतस्यां प्रतिवसंत्येताभ्यश्च नमो नमो धरायै दिशे याश्च देवता एतस्यां प्रतिवसंत्येताभ्यश्च नमो नमोवांतरयै दिशे याश्च देवता एतस्यां प्रतिवसंत्येताभ्यश्च नमो नमो गंगायमुनयोर्मध्ये ये वसंति तेमे प्रसन्नात्मानश्चि-रंजीवितं वर्धयंति नमो गंगायमुनयोर्मुनिभ्यश्च नमः ॥ नमो ब्रह्मणे नमोऽ स्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः ॥ नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥ भद्रन्नो अपिवातयमनः ॥ ॐ शांतिः शांतिः शांतिः ॥ संध्यायै नमः । गायत्र्यै नमः । सावित्र्यै नमः । सरस्वत्यै नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वाभ्यो देवताभ्यो नमः । ऋषिभ्यो नमः मुनिभ्यो नमः गुरुभ्यो नमः । आचार्येभ्यो नमः । ईशानाय नमो गोपितृमातृगुरुदेवताभ्यो नमः ॥ हस्ताभ्यां स्वस्तिकं कृत्वा कर्णौ धृत्वामुकप्रवरान्वितामुकगोत्रोत्पन्ना मुकशर्माहमस्मि अहंभो अभिवादये इति भूमिं स्पृष्ट्वाभिवाद्य । एवं गुर्वा-दीन् अभिवादयेत् ॥ ततोंजलिना दक्षिणाभिमुखो यममुपतिष्ठते । यमाय धर्म राजाय मृत्यवे चांतकायच ॥ वैवस्वताय कालाय सर्वभूतक्षयायच ॥

औदुंबराय दध्नाय नीलाय परमेष्ठिने ॥ वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥ इति ॥ ततोत्तरमुखः । ऋतगुँ सत्यं परं ब्रह्म पुरुषं कृष्ण पिंगलं । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमोनमः । नमो ब्रह्मण्य देवाय गोब्राह्मणहितायच । जगद्धिताय कृष्णाय गोविंदाय नमो नम. ॥ इति प्रदक्षिणत्रयं कृत्वा । यां सदा सर्वभूतानि स्थावराणि चराणिच । सायं प्रातर्नमस्यंति सामासंध्याभिरक्षतु । उत्तमे शिखरे जाते भूम्यां पर्वत मूर्धनि ॥ ब्राह्मणेभ्योभ्यनुज्ञाता गच्छ देवियथासुखं । स्तुतो मया वरदा वेदमाता प्रचोदयंति पवने द्विजाता ॥ आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसं । मह्यंदत्वा प्रजातुं ब्रह्मलोकं ॥ चतुःसागरपर्यंत गोब्राह्मणेभ्यः शुभं भवतु ॥ आकाशात्पतितं तोयं यथागच्छति सागरं । सर्वदेवनमस्कारः केशवं प्रतिगच्छति ॥ अथोपविश्य । द्विराचम्य । अष्टाक्षरीपंचाक्षरीजपं कर्यात् । तद्यथा । साध्यानारायणऋषिः (शिरसि) गायत्रीछंदः (मुखे) परमात्मा देवता (हृदये) । कद्रोलकाय स्वाहा अंगु० नमः । महोल्काय स्वाहा तर्ज० नमः । वीखल्काय स्वाहा मध्य० नमः । जोल्काय स्वाहा अना० नमः । ज्ञानवल्काय स्वाहा कनि० नमः । सहस्त्रवल्काय स्वाहा करतल० नमः । एवं हृदयादिन्यासः ॥ नेत्राभ्यां वौषडितिविशेषः । नेत्रत्रयायेति न वक्तव्यमित्यर्थः । ध्यानं । अर्कौघाभं किरीटान्वितमकरलसत्कुंडलं दीप्तिराजत्केयूरं कौस्तुभाभाशबल रुचिरहारं सपीतांबरंच । नानारत्नांशुभिन्ना भरणशतयुजं श्रीधराश्लिष्टपार्श्वं वंदेदोस्सक्तचक्रांबुरुहदरगदं विश्ववंद्यं मुकुंदं ॥ प्रणवपूर्वकं अष्टाक्षरीं गायत्रीं द्विगुणं जपेत् ॥ (प्रणवपूर्वकं अत एव अष्टाक्षरी मित्यर्थः । ॐ नमो नारायणाय इति जपः॥) गायत्री जपो दशवारः कृतश्चेत् ॐ नमो नारायणायेति जपः विंशतिवारः कर्तव्यः ॥ वामदेवऋषिः (इति शिरसि) । पंक्ति छंदः (इति मुखे) । श्री सद शिवरुद्रो देवता (इति हृदये) । ॐ अंगुष्ठिकाभ्यां नमः । मं मध्यमा० । शिं अनामिका० । वां कनिष्ठिका० । यं करतलकर० । ॐ हृदयाय० । नं

शिरसे० । मं शिखायै० । शिं कवचाय० । वां नेत्रत्रया० । यं अस्त्रायफट् ॥ बिभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः सर्वालंकारदीप्तिः सरसिज निलयो व्याघ्रचर्मात्तवासः । ध्येयो मुक्तापरागामृतरसकलितादिप्रभः पंचवक्त्रा- त्र्यक्षः कोटीरकोटीघटिततुहिनरो चिष्कलो तुंगमालिः ॥ प्रणवपूर्वकं पंचाक्षरीं गायत्रीं चतुर्गुणं जपेत् । ( नमः शिवाय इति पंचाक्षरीजपः को विध इति चेत् ॐ नमःशिवाय इति प्रणवपूर्वकं अस्ति । अत एव प्रणव पूर्वकं पंचाक्षरीं इति शब्दयोजनं ॥ ॐ नमःशिवाय इति जपः ॥ ) गायत्री जपः दशवारः कृतश्चेत् ॐ नमःशिवाय इति जपः चत्वारिंशद्वारः कर्तव्यः इत्यर्थः ॥ ततः आचम्य ( द्विराचम्य ) अनेन प्रातःसंध्यावंदनकर्मणा श्री परमेश्वरः प्रीयताम् ॥ इति प्रातः संध्याविधिः ॥

---

## आह्निके क्वचित् प्रसंगोपयोगविषयाः ॥

**संकल्पोच्चारः** — स द्विविधः । देशकालाभ्यां सहितः । देशकालाभ्यां विना ।

**ब्राह्मणानामनुकरणम्** — इदानींतनकालबोधायन ब्राह्मणाः केषुचित्प्रसंगेषु हिरण्यकेश्याद्यन्यसूत्रब्राह्मणान् अनुकुर्वंतीति वयं मन्यामहे । ते द्विराचमनं प्रतिकर्मारंभे प्रतिकर्मांते च कुर्वंति । अनेन कर्मणा श्रीपरमेश्वरः प्रीयतामिति प्रतिकर्मांतेकथयंति । केषुचित्प्रसंगेषु घंटानादान् कुर्वंति । एवं । परं एता- दृशकृत्यानि प्रयोगमालायां न वर्तंते । अनुकरणकृत्यानि [ ] एतादृशचिह्ने दातास्मः ।

---

## (२) ब्रह्मचारिणां प्रातरग्निकार्यविधिः

अथ प्रातरग्निकार्यं ॥ प्रातःसंध्यां विधाय ब्रह्मचारिणः प्रातरग्निकार्यं कुर्वंति । यथा । जलगंधपुष्पाक्षतसमिधो गृहित्वा शुचौ समे देशे तथाकृते वा ईषत्प्रागुदक्प्लवे गोचर्ममात्रं चतुरस्रं स्थंडिलं गोमयेन उपलिप्य होममंडल

विलिख्य कर्ता प्राङ् मुख उपविश्य द्विराचम्य पवित्रपाणिः प्राणानायम्य देश-कालौ संकीर्त्य प्रातरग्निकार्यं कर्तुं स्थल शुद्ध्यर्थं स्थंडिलोल्लेखनाख्यं कर्म करिष्ये।



होम मंडल

इति संकल्प्य। स्फ्याग्रेण उद्धयन्यमानं। अस्था अमेध्यं। अप पाप्मानं। यजमानस्य हंतु। शिवान स्संतु। प्रदिशश्चतस्रः। शन्नोमाता। पृथिवी तोक साता। इति नवपदैः। मध्येमध्ये पश्चिम पूर्वेषु। तद्दक्षिण। मध्याग्नेर्यनिर्ऋतिषु। तदुत्तरे। मध्यवायव्येशान्येषु। क्रमेण स्फ्येनोद्धत्याप उपस्पृश्य॥ शंनोदेवीरभिष्टय आपो भवंतु पीतये। शंयोरभिस्रवंतुनः॥ इत्यधोमुखेन हस्तेनाद्भिरवोक्ष्य। तत्र सिकताः शुक्लाः अनार्द्राः शुद्धप्रदेशस्थिताः केशकीटतुषभस्मांगारपिपीलिकादिवर्जिताः पंचप्रस्थ संमिता आनीय॥ देवस्यत्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां इति सिकतान्युप्य॥ ताभिररत्निमात्रं समचतुरस्रं चतुरंगुलोन्नतं प्रागुदक्प्लवं स्थंडिलमीशान्यादारभ्येशानपर्यंतं कृत्वा॥ सुवर्णरजतताम्रशकलव्रीहियवदर्भाणामन्यतममंगुष्ठानामिकाभ्यां गृहीत्वा तस्य मध्ये प्राचीनगुँ संतत मृजुमुल्लिखेत्। ॐ ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः। सबुध्निया उपमा अस्य विष्ठास्सतश्च योनिमसतश्च विव इति॥ अथ दक्षिणतः प्राचीनं। नाके सुपर्णमुपयत्पतंतगुँ हृदावेनंतो अभ्यचक्षतत्वा। हिरण्यपक्षं वरुणस्यदूतं यमस्य योनौ शकुनं भुरण्युं॥ इति अप उपस्पृश्य। अथोत्तरतः

प्राचीनं । आप्यायस्वः समेतुते विश्वतः सोमवृष्णियं । भवावाः जस्य संगथे ॥ इति पूर्वांप्रास्तिवः ॥ अथ मध्यादुदीचीनं । यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वाभुवना विवेश तस्मै रुद्राय नमो अस्तु ॥ इत्यप उपस्पृश्य ॥ अथ पश्चादुदीचीनं ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधेपदं । समूढमस्य पागुँ सुरे इति ॥ अथ प्रागुदीचीनं ॥ इंद्रं विश्वा अवीवृधन्तस-मुद्रव्यचसंगिरः । रथीतम गुँ रथीनां वाजाना गुँ सत्पतिं पतिं ॥ इत्युत्तरा-प्रास्तिवः ॥ तत ईशान्यां शकलं निधाय मुष्ठ्याभ्युक्ष्य नैर्ऋत्यां दिशितं शकलं निरस्य अप उपस्पृश्य ॥ विरलमुष्ठ्या स्थंडिलमभ्युक्ष्य ॥ ( एवं स्थल शुद्धिंकृत्वा ) । अथ समृद्धं द्वादशांगार युक्तं विधूममग्निं मृन्मयादि पात्रद्वयेन संपुटीकृत्य । सुवासिन्याहृतं स्थडिलादाग्नेय्यान्निधाय ॥ देवस्यत्वा सवितुः प्रसवेश्विनो र्बाहुभ्यां पूष्णोहस्ताभ्यां । भूर्भुवस्सुवरोम् लौकिकाग्निं प्रतिष्ठाप-यामि ॥ इति आत्माभिमुखं पाणिभ्यां प्रतिष्ठाप्य तत्पात्रे साक्षतजल मासिच्य । ईशान्यां निधाय प्रोक्षितकाष्ठानि निक्षिप्य । वेणुधमन्या प्रज्वाल्य । उपाव रोहजातवेदः पुनस्त्वं देवेभ्यो हव्यं वहनप्रजानन् । आयुः प्रजागुँ रयिमस्मासुधेहि अजस्रो दीदिहिनो दुरोणे । ॐ भूर्भुवः सुवरों ॥ अग्निं प्रतिष्ठापयामि । इति आत्मन्या रोपितमग्निं दक्षिण नासारंध्रेण विनिर्गतं मत्वा दक्षपाणितलेनादाय तस्मिन्नग्नौ संयोज्य ॥ प्राणानायम्य देशकालौ संकीर्त्य ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातरग्निकार्यं करिष्ये इति सकल्प्य जुष्टो-दमूना अतिथिर्दुरोणे । इमन्नो यज्ञमुपयाहि विद्वान् । विश्वा अग्ने अभियुजो विहत्य । शत्रूयता माभराभो जनानां ॥ इत्युपस्थाय । अथाग्नेरीशानमारभ्य सजलेन हस्तेन प्रदक्षिणक्रमेण ईशानपर्यंतं परिसमूह्य पर्युक्ष्य । स्थंडिलाद् शांगुलि मिते देशे दर्भैः परिस्तृणाति । ॐ देवस्यत्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां ॥ परिस्तृणामीति पुरस्तादुदगग्रैः षोडशभिः दर्भैः ॥ ॐ भूर्भुवस्सुवरोम् परिस्तृणामीति दक्षिणतः प्रागग्रैः सप्तदशभिः दर्भैः ॥ ॐ

उद्वयं तमसस्परिपश्यंतो ज्योतिरुत्तरं । देवदेवत्रा सूर्यमगन्म ज्योतिरुत्तमं । परिस्तृणामीति पश्चात् उदगग्रैः अष्टादशभिः दर्भैः ॥ ॐ अग्न आयाहि वितये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ॥ परिस्तृणामीति उत्तरतः प्रागग्रैः सप्तदशभिः दर्भैः ॥ इति परिस्तीर्य ॥ दक्षिणान्दर्भान्पू-र्वपश्चिमपरिस्तरणयोरुपरि कुर्यात् । उत्तरा गुँस्तयोरधः ॥ स्वाहा इत्येकां समिधमग्नौ निधाय । ॐ जुषस्वनस्समिधमग्ने अद्यशोचा बृहद्यजतं धूम मृण्वन् । उपस्पृशं दिव्यं सानस्तूपैः संरश्मिभिस्ततनस्सूर्यस्य ॥ इति पठेत् । स्थंडिलादष्टांगुलिमिते देशे प्रदक्षिणमग्निं परिषिंचति । अदितेनुमन्यस्वेति दक्षिणतः प्राचीनं । अनुमतेनुमन्यस्वेति पश्चादुदीचीनगुँ । सरस्वतेनु मन्स्वेति उत्तरतः प्राचीनं । देवसवितः प्रसुवेति प्रागादिसंमतात्प्रदक्षिणमग्निं परिषिच्य ॥ ॐ चत्वारि शृंगात्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य ॥ त्रिधाबद्धो वृषभो रोरवीति महोदेवो मर्त्यागुँ आविवेश ॥ इत्यग्निंध्यात्वा । स्थंडिलादेकाद शांगुलिमिते देशे गंधपुष्पाक्षतैः प्रागाद्यष्टदिक्षु प्रदक्षिणमग्निं अलंकरोति ॥ अग्नेयनमः जात-वेदसे नमः सहोजसे नमः अजिराप्रभवे नमः वैश्वानराय नमः नर्यापसेनमः पक्तिराधसे नमः त्रिसर्पिणे नमः ॥ इति प्रागाद्यष्टदिशु गंधाक्षतादिभिः अलंकृत्य ॥ श्री यज्ञेश्वराय नमः गंधपुष्पाक्षतान्समर्पयामि । ( इति अग्नौ क्षिपेत् ) ॥ अग्निं प्रज्वलितं वंदे जातवेदं हुताशनं । सुवर्णवर्ण मनलं समिद्धं विश्वतोमुखं ॥ इत्यग्निं प्रणम्य ॥ ॐ भूः स्वाहा अग्नय इदं । ॐ भुवः स्वाहा वायव इदं । ॐ सुवः स्वाहा सूर्याय इदं । ॐ भूर्भुवः सुवः स्वाहा प्रजापतय इदं ॥ इत्याज्याक्तचतस्र समिधः प्रतिमंत्रं हुत्वा । ॐ जुषस्वनः समिधमग्ने अद्यशोचा बृहद्यजतं धूममृण्वन् । उपस्पृश दिव्यं सानस्तोपैः संरश्मिभिस्ततनः सूर्यस्य ॥ अथ प्रदक्षिणमग्निं परिषिंचति । अदितेन्वमगुँस्थाः । अनुमतेन्वमगुँस्थाः । सरस्वतेन्वमगुँस्थाः । देवसवितः

प्रासावीः ॥ इति पुर्ववत्परिषिच्य । उपोत्थाय तिर्यगभिमुखः स्थित्वा उप-
तिष्ठते । यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं । यत्ते अग्ने वर्चस्तेनाहं
वर्चस्वी भूयासं । यत्ते अग्ने हरस्तेनाहं गुँ हरस्वी भूयासं । मयि मेधां
मयिप्रजां मय्यग्नि स्तेजो दधातु । मयि मेधां मयिप्रजां मयिइंद्र इद्रियं
दधातु । मयिमेधां मयिप्रजां मयिसूर्यो भ्राजो दधातु । इति । अथोपविश्य
उपतिष्ठते । मानस्तोके तनये मान आयुषि मानो गोषु मानो अश्वेषुरीरिषः ॥
वीरान्मानो रुद्रभा मितोवधी र्हविष्मतो नमसा विधे मने ॥ इति ॥ अथ
प्राग्वोदग्वाहुत भस्म गृहीत्वा ॥ ओजोसीति ललाटे । सहोसीति कंठे ।
बलमसीति दक्षिणभाहुमूले । भ्राजो सीति कंठपृष्ठ । देवानां धामनामासीनि
नाभौ । विश्वमसि विश्वायुरिति हृदये । सर्वमसि सर्वायु रभिभुरोमिति मूर्ध्नि ॥
इत्युपस्पृश्य ॥ मंत्रहीनं क्रियाहीनं भक्तिहीनं हुताशत । यद्धुतंतु मया देव
परिपूर्णं तदस्तुते ॥ अज्ञानाद्वा प्रमादाद्वा वैकल्यात्साधनस्यवा । यन्यूनमति
रिक्तं च तत्सर्वं क्षंतुमर्हसि ॥ श्रद्धामेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलं ।
आयुष्यं तेज आरोग्यं देहिमे हव्यवाहन ॥ इति प्रार्थ्य ॥ गोत्राभिवंदनं
कृत्वा ॥ [द्विराचम्य] ॥ अनेन प्रातरग्नि कार्यक्रमणा श्री परमेश्वरः प्रीयताम् ॥
अथ समारोपणं ॥ याते अग्ने यज्ञियातनूस्तयेह्यारोहात्मात्मानं । अच्छाव-
सूनि कृण्वन्नस्मेनर्यापुरूणि । यजो भूत्वा यज्ञमासीद स्वां योनिं । जात
वेदोभुव आजायमानः सक्षय एहि ॥ इति दक्षिणपाणिं निष्ठप्य (तप्त्वा)
आत्मनि समारोपयेत् ॥ इति प्रातरग्निकार्यविधिः ॥ (होममंडलस्य समंतात्
प्रागाद्यष्टदिक्षु अश्वत्थपर्णानि इति ज्ञेयं नतु कमलपुष्पाणि ।)

---

**अत्र कंचित् प्रसंगोपयोग विशयाः ॥**

**उपनयनव्रतं** — उपनयना नंतरं बटुः उपनयनव्रतं अरभते । तद्व्रते स उपनयनाग्निं स्थंडिले रक्षन् तद्व्रतं त्र्यहं आचरति । चतुर्थेऽहनिस उपनयन व्रतस्य विसर्जनं करोति ।

**स्नातकः —** ब्रह्मचारी वेदाध्ययनं ब्रह्मचर्यव्रतं वा उभयंवा समाप्य समावर्तनाख्यकर्मानंतरं स्नातकः भवति ।

---

## (३) स्नातकानां प्रातरग्निकार्यविधिः ॥

स्नातकाः प्रातःसंध्यानंतरं समावर्तनप्रभृति विवाहपर्यंतं प्रातःकाले प्रातरग्निकार्यं कुर्वंति । स्नातकानां अग्निकार्यविधिः ब्रह्मचारिणां अग्निकार्य विधिवत् अस्ति । किंतु स्नातकाग्निकार्यविधौ अयं भेदः । तद्यथा । ॐ भूः स्वाहा अग्नय इदं ॥ ॐ भुव स्वाहाः वायव इदं ॥ ॐ सुवः स्वाहा सूर्याय इदं ॥ ॐ भूर्भुवः सुवः स्वाहा प्रजापतय इदं ॥ एताः चतस्रः आहुतीः आज्येन जुहुयात् । नतु समिद्भिः । शेषं समानं । इति स्नातकानां प्रातरग्निकार्यविधिः ॥

---

## (४) गृहस्थानां प्रातरग्न्यौपासनविधिः ।

गृहस्थः प्रातःसंध्यां विधाय प्रातरौपासनं कुर्यात् । आहुतिना अवपद्येत पार्वणं पार्वणांतरदिति वचनेन सायमौपासनं प्रातरौपासनविधानसमये प्रातरौपासनेन सह कर्तुं शक्यते ॥ पर्वणि इदं पार्वणं । “ पर्व प्रस्तावोत्सवयोर्ग्रंथौ विषुवदादिषु । दर्शप्रतिपत्संधौच तिथिग्रंथ विशेषयोः ” इति हैमः । प्रस्तावः योग्यकालः । अत पर्व योग्यकालः । अथ प्रयोगः । बद्ध शिखो बद्धकच्छो यज्ञोपवीति प्राङ्मुख उपविश्य कर्ता द्विराचम्य प्रातरग्निकार्यविधौ उक्तवत् स्थलशुद्धिं कृत्वा । परं मंत्रवद्वा तूष्णींवा तिस्रस्तिस्रः रेखा लिखेत् । अथ समृद्धमित्यादि निधाय इत्यंतं कृत्वा । देवस्य० सुवरोम् लौकिकाग्निं प्रतिष्ठापयामि । इति आत्माभिमुखं० प्रज्वाल्य । ॐ आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वां योनिमासीद साध्या । अस्मिन्त्सधस्ते अध्युत्तरस्मिन् विश्वेदेवा यजमानस्य सीदत ॥ उद्बुद्ध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सगुँ

सृजेथा मयंच । पुनः कृण्वगुँस्त्वा पितरं युवानमन्वातागुँसी त्वायितंतु मेतं ॥ ॐ भूर्भुवः सुवरोम् अग्निं प्रातिष्ठापयामि । इति द्वाभ्यां मंत्राभ्यामारोपित समिधं अग्नौ प्रक्षिप्य । आसनं कृत्वा । आसने उपविश्य इत्यर्थः । प्राणानायम्य । देशकालौ संकीर्त्य ममोपात्त दुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातरौपासनाहुतिं ( सायमौपासनं प्रातरौपासने प्रातरौपासनेन सह कर्तुं इच्छति चेत् तदा प्रातः सायमौपासनाहुतिं तंडुलै र्होष्यामि । व्रीहिभि र्होष्यामीति व्रीहिणां । इति वक्तव्यं । ) तंडुलै र्होष्यामि ॥ व्रीहिभि र्होष्यामीति व्रीहिणां ॥ जुष्टोदमूना इति प्रातरग्निकार्ये उक्तवत् ( यत् अग्नि मुखप्रयोगात्स्वीकृतं तदित्यर्थः ) उपस्थाय । प्रातरग्निकार्ये उक्तवत् अग्निं परिसमुह्य पर्युक्ष्य दर्भैः परिस्तीर्य ॥ होमद्रव्यं पात्रे निधाय । द्वौदर्भौ अग्नौ प्रज्वाल्य अभिद्योत्य पुनर्दर्भद्वयं प्रज्वाल्य त्रिःपर्यग्नि कृत्वोत्तरतो निरस्य अप उपस्पृश्य अग्नेः पश्चान्निधाय ॥ अदितेनु मन्यस्वेत्यादिभिः प्रागादि समंतं परिषिच्य । अग्नये नमः । जातवेदसे नमः । सहोजसे नमः । अजिराप्रभवे नमः । वैश्वानराय नमः । नर्यापसे नमः । पंक्तिराधसे नमः । विसर्पिणे नमः । इति गंधपुष्पाक्षतादिभिः प्रागाद्यष्ट दिक्षु प्रदक्षिणमग्निमलं कृत्य । अग्निं प्रज्वलितं० मुखं । इति प्रणम्य । तूष्णीकां समिधं अग्नौ निधाय तस्यामार्द्रायां तत्पश्चिमभागे समिध्येव शतान्यूनं होमद्रव्यं गृहीत्वा हस्त बिलेन वामपार्श्वेन प्राङ्मुखं प्रबाहुग्जुहोति ॥ ॐ सूर्याय स्वाहा सूर्याय इदं ॥ पूर्वतो भूयसी मवदाय तामुत्तरतोतिहाय समिध्येव पूर्वार्धे हस्तबिलेन वामपार्श्वेन प्रत्यङ्मुखं प्रबाहुक् जुहोति ॥ यथा ॥ ॐ प्रजापतय इत्युपांशु स्वाहेत्युच्चैः प्रजापतय इदं इति मनसि अप्रतिमुखं प्रबाहुक् जुहोति ॥ ( अथ सायं । पूर्ववदवदाय समिधि पश्चिमभागे । ॐ अग्नये स्वाहा । अग्नय इदं ॥ ततो भूयसीमवदाय पूर्वं आहुतिं दक्षिणतो तिहाय । ॐ प्रजापतये स्वाहा । प्रजापतय इदं । इति समिधि पूर्वभागे जुहुयात् । )

आहुति परिमाणं । व्रीहिणां वा यवानां वा शतमाहुति रिष्यते । इति । ॐ जुषस्वनः० । अदितेन्वमगुँस्थाः इत्यादि परिषिच्य । यत्ते अग्ने० मयि मेधां० इत्युपस्थाप । अथोपविश्य उपतिष्ठेत । मानस्तोके० । इति । प्रागुत्तरतोवा भस्म गृहीत्वा । ओजीसीति आरम्य मूर्ध्नि इत्यंत अनामिकया स्पृष्ट्वा । श्रद्धां मेधां इत्याशिषं प्रार्थ्य । गोत्रेण अभिवाद्य । यस्य स्मृत्या च नामोक्त्या तपोयज्ञ क्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं ॥ इत्युक्त्वा । [द्विराचम्य] । अनेन प्रातरौपासनाहुतिकर्मणा श्रीपरमेश्वरः प्रीयताम् । (साय-मौपासनमपि कृतश्चेत् । अनेन प्रातःसायमौपासनाहुतिकर्मणा श्रीपरमेश्वरः प्रीयताम् ।) ॐ आयंतेयोनि ऋत्वियो यतो जातो आरोचथाः । तं जानन्नग्न आरोहाथा नो वर्धयारयिं । इत्यग्निं पालाशाश्वत्थखादिरौदुंबरीषु वा समारोपणं कुर्यात् ॥ इति प्रातरौपासनविधिः ॥

---

**दिनस्य प्रथमभागकृत्यम्** — दिनस्य प्रथमभागे दंतधावनं पाणिपाद प्रक्षालनं प्रातःसंध्यावंदनं अग्निकार्यं औपासनं च कार्याणि ।

**द्विःकार्याणि कृत्यानि** — अग्निकार्यमौपासनं च प्रातःसायंच एवंद्वि कार्ये । देवतार्चनं वैश्वदेवबलिहरणं च दिवा रात्रौ च एवं द्विः कार्ये । संध्यातुत्रिः कर्तव्या । भोजनं च द्विः कर्तव्यम् ।

---

## (५) ब्रह्मयज्ञः ।

तस्यकालः ॥ अष्टधा विभक्तस्य दिनस्य द्वितीयभागेवा मध्याह्नस्नाना नंतरंवा नित्यतर्पणात्प्राग्वा मनुष्ययज्ञानंतरं वा ब्रह्मयज्ञं कुर्यात् । समाचम्य यजुःशाखी इत्यादि वचनात् ब्रह्मयज्ञं तर्पणात्प्राक् कुर्यात् । अथ प्रयोगः । कर्ता प्राङ्मुखो भूत्वा द्विराचम्य दर्भासने उपविश्य प्राणानायम्य देशकालौ संकीर्त्य ममोपात्त दुरितक्षयद्वारा श्रीपरमेश्वर प्रीत्यर्थं ब्रह्मयज्ञेन यक्ष्ये । इति

संकल्प्य । विद्युदसि विद्यमे पाप्मानमृतात्सत्यमुपैमि इत्यपः स्पृष्ट्वा त्रिराचम्य द्विरन्मृज्य ( द्विः परिमृज्य ) वामकरं प्रोक्ष्य शिरश्चक्षुषी नासिके श्रोत्रे हृदय मालभ्य वामपादोपरि दक्षिणपादं प्रतिष्ठाप्य दक्षिणजानूपरि सपवित्रे संहतौ प्राङ्मुखौ पाणी निधाय ॥ ॐ भूर्भुवः सुवः । तत्सवितुर्वरेण्यं । भर्गोदेवस्य धीमहि । धियो योनः प्रचोदयात् ॥ ॐ अग्निमीळे पुरोहितं यज्ञस्य देव-मृत्विजं ॥ होतारं रत्न धातमं ॥ ॐ इषेत्वोर्जेत्वा वायवस्थो पायवस्थ देवोवः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मामावस्तेन ईशतमाघशग्ङ्सो रुद्रस्य हेतिः परिवो वृणक्तु ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥ ॐ यज्ञस्य घोषदसि प्रत्युष्टग्ङ् रक्षः प्रत्युष्टा अरातयः प्रेयमगाद्धिषणा बर्हि रच्छ मनुना कृता स्वधया वितष्टात आवहंति कवयः पुरस्ताद्देवेभ्यो जुष्ट मिहबर्हिरासदे देवानां परिषूनमसि वर्षवृद्धमसि देवबर्हि मात्वान्वङ्मा तिर्यक्पर्वते राध्या समाच्छेत्ताते मारिषन्देव बर्हिः शतवल्शं विरोहसहस्रवल्शा वियग्ङ् रुहेम पृथिव्याः संपृचः पाहि सुसंभृता त्वा संभराम्यदित्यै रास्ना-सीन्द्राण्यै सन्नहनं पूषाते ग्रंथिं ग्रथ्नातु सते मास्थादिंद्रस्यत्वा बाहुभ्यामुद्यच्छे बृहस्पते मूर्ध्ना हरांम्युर्वंतरिक्षमन्विहि देवं गममसि ॥ ॐ शुंधध्वं दैव्याय कर्मणे देवयज्यायै मातरिश्वनो घर्मोसि द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृग्ङ्हस्व माह्वार्वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारग्ङ् हुतस्तोको हुतोद्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवी-भ्याग्ङ्सा विश्वायुस्सा विश्वव्यचास्सा विश्वकर्मा संपृच्यध्वमृतावरी रूर्मिणी मधुमत्तमा मंद्राधनस्य सातये सोमेन त्वाऽऽतनच्मीन्द्राय दधिविष्णो हव्यग्ङ् रक्षस्व ॥ अग्न आयाहि वीतये गृणानो हव्यदातये ॥ निहोता सत्सिबर्हिषि ॥ शंनो देवीरभिष्टय आपो भवंतुपीतये । शंयो रभिस्रवंतुनः ॥ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाग्ङ् रेताग्ङ्सि जिन्वति ॥ ॐ यद्देवा देव

हेळनं देवासश्च कृमावयं । आदित्या स्तस्मान्मामुंचतर्त स्यर्ते नमामित ॥ अथशिक्षां प्रवक्ष्यामि । अमावास्येन वा पौर्णमास्येन वा हविषा यक्ष्यमाणो भवति । वृद्धिरादैच् । समाम्नायः समाम्नातः । मयरसतजभनलग सम्मितं ॥ पंचसंवत्सरमयं ॥ गौः ॥ ग्मा ॥ ज्मा ॥ योगीश्वरं याज्ञवल्क्यं ॥ नारायणं नमस्कृत्य ॥ अथातो धर्मजिज्ञासा ॥ अथातो ब्रह्मजिज्ञासा ॥ इति पठित्वा ॥ ( अथवा अशक्तश्चेत् ॥ ॐ भूर्भुवस्सुवः । तत्सवितुर्वरेण्यं । भर्गो देवस्य धीमहि । धियो योनः प्रचोदयात् ॥ इमां गायत्रीं यथाशक्ति जपित्वा । ॐ नमो ब्रह्मणे नमोऽस्त्वग्नये नमः पृथिव्यै नमः ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥ ॐ नमो ब्रह्मणे नमोऽस्त्वग्नये० बृहते करोमि ॥ ॐ नमो ब्रह्मणे० बृहते करोमि ॥ इति पठित्वा ॥ ) वृष्टिरसि वृश्चमे पाप्मान मृतात्सत्य मुपागां ॥ इत्यपः स्पृष्ट्वा ॥ शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभते । ( इत्यपः तेषुस्थानेषु स्पृष्ट्वा इत्यर्थः ) ॥ द्विराचम्य । [ अनेन ब्रह्मयज्ञ कर्मणा श्री परमेश्वरः प्रीयताम् ] ॥ ततः नित्यतर्पणं कुर्यात् ।

---

## (६) नित्यतर्पणम् ।

अथ प्रयोगः । द्विराचम्य प्राणानायम्य देशकालौ संकीर्त्य ममोपात्त दुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं देवऋषि पितृप्रीत्यर्थं देवर्षि पितृतर्पणं करिष्ये । इति संकल्प्य । पूर्वाभिमुखोंगुल्यग्रेण देवतीर्थेन ( अनेन देवकर्मणा । इदं देवकर्मकृत्वा इत्यर्थः । ) देवतांस्तर्प येत् । ब्रह्मादयोये देवास्तां देवांस्तर्प यामि । भूर्देवांस्तर्पयामि । भुवर्देवांस्त० । सुवः देवास्तर्प० । भूर्भुवः सुवः देवांस्तर्प० ॥ अथ निवीत्युदङ् मुखोंगुली मूलेन वामपार्श्वेन ऋषितीर्थेन ऋषीन् द्विर्द्विस्तर्प येत् । कृष्णद्वैपायनादयो येऋषयस्ता नृषींस्तपयामि तर्पयामि । भूर्ऋषींस्तर्प० तर्प० । भुवः ऋषींस्तर्प० तर्प० । सुवः ऋषींस्तर्प० तर्प० । भूर्भुवः सुवः ऋषींस्तर्प० तर्प० । अथ प्राचीनावीति दक्षिणाभिमुखः

पितृतीर्थेन अंगुष्ठतर्जनीमध्येन पितॄ स्त्रिस्त्रिस्तर्पयेत् ॥ अस्मत्पि न् अमुक शर्मणः अमुकगोत्रान् स्वधानमस्तर्पयामि स्वधानमस्तर्पयामि स्वधा नमस्तर्पयामि। अस्सत्पितामहान् अनुक शर्मणः अमुकगोत्रान् स्वधा नमः तर्प० स्वधा० स्वधा० ॥ अस्मत्प्रपिता महान् अमुक शर्मणः अमुक गोत्रान् स्वाधा नम स्तर्प० स्वधा० स्वधा० ॥ अस्मन्मातृः अमुकदायीः अमुकगोत्राः स्वधा० स्वधा० स्वधा० ॥ अस्मत्पितामहीः अमुकदायीः अमुक गोत्राः स्वधा० स्वधा० स्वधा० ॥ अस्मत्प्रपितामहीः अमुकदायीः अमुकगोत्राः स्वधा० स्वधा० स्वधा० ॥ सपत्निमातृः अमुकदायीः अमुकगोत्राः स्वधा० स्वधा० ॥ मातामहान् अमुकशर्मणः अमुकगोत्रान् स्वधा० स्वधा० स्वधा० ॥ मातुः पितामहान् अमुकशर्मणः अमुकगोत्रान् स्वधा० स्वधा० स्वधा० ॥ मातुः प्रपितामहान् अमुकशर्मणः अमुकगोत्रान् स्वधा० स्वधा० स्वधा० ॥ मातामहीः अमुकदायीः अमुकगोत्राः स्वधा नमस्तर्प० ॥ मातुः पितामहीः अमुकदायीः अमुकगोत्राः स्वधा० ॥ मातुः प्रपितामहीः अमुकदायी अमुक गोत्राः स्वधा० ॥ स्वस्त्रीं अमुकां अमुकगोत्रां स्वधा० ॥ स्वपुत्रं अमुकं अमु-कगोत्रं स्वधा० स्वधा० स्वधा० ॥ तत्पत्नीं अमुकां अमुकगोत्रां स्वधा० ॥ तत्पुत्रं अमुकं अमुकगोत्रं स्वधा० स्वधा० स्वधा० ॥ अस्मत्पितुः ज्येष्ठ भ्रातृन् अमुकशर्मणः अमुकगोत्रान् स्वधा० स्वधा० स्वधा० ॥ तत्पत्नीः अमुकदायीः अमुकगोत्राः स्वधा० ॥ तत्पुत्रं अमुकशर्माणं अमुकगोत्रं स्वधा० स्वाधा० स्वाधा० ॥ अस्मत्पितृभ्रातृन् ( अस्मत्पितुः कनिष्ठभ्रातृन् ) अमुक शर्मणः अमुकगोत्रान् स्वधा० स्वधा० स्वधा० ॥ तत्पत्नीः अमुकदायीः अमुकगोत्रा स्वधा० ॥ तत्पुत्रं अमुकशर्माणं अमुकगोत्रं स्वधा० स्वधा० स्वधा० ॥ अस्मत्मातुलान् अमुकशर्मणः अमुकगोत्रान् स्वधा० स्वधा० स्वधा० ॥ तत्पत्नीः अमुकदायीः अमुकगोत्राः स्वधा० ॥ तत्पुत्रं अमुकशर्माणं अमुकगोत्रं स्वधा० स्वधा० स्वधा० । आत्म भ्रातृन् अमुकशर्मणः अमुकगोत्रान् स्वधा० स्वधा० स्वधा० । तत्पत्नीः अमुकदायीः

अमुकगोत्राः स्वधा० । तत्पुत्रं अमुकं अमुकगोत्रं स्वधा०स्वधा०स्वधा० । अस्मत्पितृभगिनीः अमुकदायीः अमुकगोत्राः स्वधा० । अस्मत्मातृभगिनीः अमुकदायीः अमुकगोत्राः स्वधा० । आत्मभगिनीं अमुकदायीं अमुकगोत्रां स्वधा० । तद्भर्तारं अमुकशर्माणं अमुकगोत्रं स्वधा०स्वधा०स्वधा० । तत्पुत्रं अमुकं अमुकगोत्रं स्वधा०स्वधा० स्वधा० । अस्मत्श्वशुरान् अमुकशर्मणः अमुकगोत्रान् स्वधा०स्वधा०स्वधा० । तत्पत्नीः अमुकदायीः अमुकगोत्राः स्वधा० । श्यालकं अमुकं अमुकगोत्रं स्वधा० स्वधा० स्वधा० । तत्पत्नीं अमुकां अमुकगोत्रां स्वधा० । अस्मदाचार्यान् अमुकशर्मणः अमुकगोत्रान् स्वधा० स्वधा० स्वधा० । तत्पत्नीः अमुकदायीः अमुकगोत्राः स्वधा० । अस्मद्गुरून् अमुकशर्मणः अमुकगोत्रान् स्वधा० स्वधा० स्वधा० । तत्पत्नीः अमुकदायीः अमुकगोत्राः स्वधा० । ज्ञातीन् अमुकशर्मणः अमुकगोत्रान् स्वधा० स्वधा० स्वधा० । तत्पत्नीः अमुकदायीः अमुकगोत्राः स्वधा० । सखीन् अमुकशर्मणः अमुकगोत्रान् स्वधा० स्वधा० स्वधा० । तत्पत्नीः अमुकदायीः अमुकगोत्राः स्वधा० । अमात्यान् अमुकशर्मणः अमुकगोत्रान् स्वधा० स्वधा० स्वधा० । तत्पत्नीः अमुकदायीः अमुकगोत्राः स्वधा० । अंतेवासिनः अमुकशर्मणः अमुकगोत्रान् स्वधा० स्वधा० स्वधा० । तत्पत्नीः अमुकदायीः अमुकगोत्राः स्वधा नमस्तर्पयामि ॥ [ द्विराचम्य । अनेन देवर्षि पितृतर्पणकर्मणा श्रीपरमेश्वरः प्रीयताम् ] ॥ इति नित्यतर्पण विधिः ॥ नित्यतर्पणे कालादिक्रमाः । (१) नित्यतर्पणकालः । ब्रह्मचारी गृहस्थो वा द्वितीयभागे ब्रह्मयज्ञानंतरं नित्यतर्पणं कुर्यात् । किंच स ब्रह्मयज्ञं विना द्वितीयभागे केवलं नित्यतर्पणं कर्तुं शक्नोति । गृहस्थः यद्यशक्तयादिना प्रातःकाले मंत्रस्नानकृतश्चेत् मध्याह्ने यथाविधि जलेन स्नात्वा संध्यामुपास्य स पूर्वं ब्रह्मयज्ञं कृत्वापि अधुना तं कुर्यात् द्वितीयभागे च नित्यतर्पणं कृत्वापि स तं अधुना कुर्यात् । (२) नित्यतर्पणकाले सव्यापसव्यादि । देवान् सव्येन पितॄन् वामेन मनुष्यान् च निवीतेन तर्पयेत् ॥ (३) अंजलिक्रमः । उभयेन

पाणिना नित्यतर्पणं कुर्यात् । किंतु श्राद्धे विवाहकाले च एकेन पाणिना तर्पणं कुर्यात् । (४) तर्पणोदकस्य निधानस्थानानि । उदकेषुवा पात्रेषुवा शुद्धभूमौ वा उभयपाणिना तर्पणोदकं प्रयच्छेत् । अन्यथा तर्पणं व्यर्थं भवति । यत्रस्थलं अशुचि अस्ति तदा उदके तर्पयेत् । (५) तर्पणोदकस्य मोक्षस्थानानि । तर्पणानंतरं तपणोदकं शुभे पात्रांतरे जलपूर्णे गर्ते वा क्षिपेत् । नतु अशुचौ स्थले । (६) नित्यतर्पणे रूपनिषेधः । नित्यतर्पणे वसुरुद्रादित्यरूपैः विना केवल नामगोत्रादियुक्तं तर्पणं कुर्यात् । (७) अंजलि संख्या । देवानां तर्पणे प्रत्येकं देवं प्रति तर्पयामि इति सकृदुक्त्वा प्रत्ये-काय एकं अंजलिं दद्यात् । ऋषीणां तर्पणे प्रत्येकं ऋषिं प्रति तर्पयामि तर्पयामि इति द्विरुक्त्वा प्रत्येकाय द्वौ अंजली दद्यात् । पितणां तर्पणे एवं क्रमः । सर्वत्र पुरुषाणामंजलित्रयमस्ति । तिसृणां मातृवर्गस्त्रीणामंजलित्रय-मस्ति । मातृवर्गे भिन्न स्त्रीणां एकैकं अंजलिः । सपत्निमातुरंजलिद्वयं । (८) श्राद्धदिवसेषु नित्यतर्पणम् । प्रत्याब्दिक पार्वणदर्शादि श्राद्धदिवसेषु श्राद्धानंतरं ब्रह्मयज्ञं कृत्वा नित्यतर्पणं तिलै विंना कर्तव्यं । (९) तिलनि-षेधः । गृहेवा मृताहे वा जन्मदिनेवा नित्यतर्पणं तिलै विंना कुर्यात् । इत्यादि । (१०) दिशां निर्देशः । नित्यतर्पणे देवान् प्राङ्मुखो भूत्वा ऋषीन् उदङ्मुखो भूत्वा पितॄन् दक्षिणामुखो भूत्वा च तर्पयेत् । (११) कठिण पितृशब्दानां कर्नाटक भाषायामर्थाः । पितृ तंदे । पितामह तंदेय तंदे । प्रपितामह पितामहन तंदे । मातृ अव्व । पितामही तंदेय अव्व । प्रपितामही अज्जन अव्व । सपत्निमातृ तंदेय एरडने हेंडति । मातामह अव्वन तंदे । मातुः पितामह अव्वन तंदेय तंदे । मातुःप्रपितामह अव्वन अज्जन तंदे । मातामही मातामहन हेंडती । मातुःपितामही अव्वन तंदेय तंदेय हेंडती । मातुःप्रपितामही अव्वन अज्जन तंदेय हेंडती । स्वस्त्री तन्न हेंडती । पितृव्य चिगप्प । पितुः ज्येष्ठ भ्रातृ दोड्डप्प । मातुल अव्वन

अण्ण अथवा तम्म । पितृभगिनी तंदेय अक्क अथवा तंगी । श्वशुर हेंडतिय तंदे । श्यालक हेंडतिय सहोदर । श्यालक शब्दके एरडने अर्थवु तंगिय गंड । आचार्य पुरोहित । गुरु गायत्री उददेष्टा उपनयनद यजमाननु । ज्ञाति आप्त अथवा संबंधिक । सखी मित्र । अमात्य नेरेयवनु । अंतेवासी संगतियल्लिरुववनु अथवा शिष्यनु । (१२) तर्पणानि । द्वे देवऋषि पितृ-तर्पणे स्तः । एकं तर्पणं लघु अस्ति । अन्यन्महदस्ति । लघुतर्पणं नित्यं प्रातःस्नानमध्ये कर्तव्यम् । महतः तर्पणस्य नाम महातर्पणं । इदं उपाकर्मांगत्व ब्रह्मयज्ञानंतरं कुर्यात् । आह्निकेऽपि ब्रह्मयज्ञानंतरं नित्यतर्पण संकल्पोक्तप्रकारेण देवऋषि पितॄणां तर्पणं कुर्यात् । नतुतेषां महातर्पणम् । देवऋषिपितृतर्पणं प्रातःस्नानमध्ये अस्ति । एतदेवतर्पणं ब्रह्मयज्ञानंतरं कर्तव्ये नित्यतर्पणे कर्तव्यं । तथापि ब्रह्मयज्ञानंतरं कर्तव्ये नित्यतर्पणे केचिद्भेदाः संति । तस्मिन्नित्यतर्पणे कर्तव्यं पितृतर्पणं प्रयोगकारेण दत्तमस्ति । यदा एतत्पितृतर्पणं प्रातःस्नाने कर्तव्यदेवऋषितर्पणेन सहकृतं भवति तदा एतत्तर्पणं देवऋषिपितृतर्पणं भवति । यदा एतद्देव ऋषिपितृतर्पणं आह्निके नित्यंकृतं भवति तदा अस्य नाम नित्यतर्पणमिति अस्ति । एवमाह्निके ब्रह्मयज्ञानंतर कर्तव्यदेवऋषिपितृतर्पणं नित्यतर्पणम् ॥

---

**दिनस्य द्वितीयभाग कृत्यम् ।** द्वितीयभागे ब्रह्मयज्ञं नित्यतर्पणं च कुर्यात् । ततः वेदशास्त्राद्यभ्यासं कुर्यात् ॥

**दिनस्य तृतीयभाग कृत्यम् ।** अष्टधा विभक्तस्य दिनस्य तृतीयभागे ऋणार्थं शरीरयात्रार्थं पोष्यवर्गार्थं च धनं ईहेत् ( यतेत ) ॥

---

## (७) नित्यस्नानविषये बहूनि कर्माणि ।

प्रातःकाले स्नानं कुर्यात् मध्याह्नकालेच स्नानं कुर्यात् । एवं स्नानस्य द्वौ कालौ प्रयोगकारः कथयित्वा स्नानकालयोः समर्थनाय इदं स्मृतिवचनं

दिशति। प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः। यतेस्त्रिषवणः स्नानं सकृच्च ब्रह्मचारिणः॥ स्नानस्य द्वौ कालौ स्तः प्रातःकालो मध्याह्नकालश्च। स्नानस्य तृतीयकालोपि अस्ति। परं यति संबंधस्य तस्य कालस्य नाम न दत्तं। इत्यनेन वचनेन निश्चीयते। अपिच गृहस्थः स्नानं द्विः कुर्यात्। वानप्रस्थोऽपि स्नानं द्विः कुर्यात्। यतिश्च स्नानं त्रिः कुर्यात्। ब्रह्मचारीतु एकदा एव स्नानं कुर्यात्। इत्यप्यनेन वचनेन निश्चीयते। किंतु ब्रह्मचारी एकदैव स्नानं कुर्यादिति इयदेव उक्त्वा तस्य स्नानकालस्य नाम प्रयोगकारो न उक्तवान्। उक्तनामभ्यां प्रातःकालमध्याह्नकालाभ्यामन्यकालो ब्रह्मचारिणः स्नानसमयो नास्ति अतः तस्य स्नानसमयस्य नाम न दत्तवान्। सकृत् स्नायादित्येव उक्तं। स्मृतिवचनानुरोधेन सकृन्नाम प्रातःकालो मध्याह्न कालोवा। किंच तद्वचनानुरोधेन द्वौ कालौ अपि दोषरहितौ। अत एव तयोः स्नानकालयोः कोप्येकः कालः श्रेयान् इष्टोवा इति प्रयोगकारेण नकथितम्। केचिज्जनाः एवमर्थं कुर्वंति। सकृत्स्नयात् इत्यस्यार्थः चतुर्थभागे स्नायात् एवं कुर्वंति। अयमसत्यार्थः। कुतः। सकृत्स्नायादिति इदं चतुर्थभागकृत्यानामेव वर्णन मयवाक्येषु नास्ति। इदं स्मृतिवचनं अस्ति। तत्स्मृतिवचनं चतुर्थभागकृत्यान्यव वर्णयति इतिन। किंतु तत्प्रातर्मध्याह्नकाल कृत्ये वर्णयति। अतः तेषामयमसत्यार्थः। एवं ब्रह्मचारी प्रत्यहमेकदा एव स्नानं कुर्यात्प्रातःकाले मध्याह्नकाले वा। गृहस्थस्तु स्नानं द्विः कुर्यात् प्रातः मध्याह्नेच। यतिश्च स्नानं त्रिः कुर्यात्। अशक्तविषये। ब्रह्मचारी गृहस्था दिर्वा शक्तिरहितश्चेत् हिरण्येत्यादिकान्मंत्रान्क्रमात् जपेत्। इदमेव मंत्रस्नान भवति। इदं मंत्रस्नानं कुर्यात्। अन्यत्र प्रयोगकारो यद्यशक्त्यादिना प्रातःकालस्नानकृतं चेत् मध्याह्ने स्नात्वा एवं कथयति। अस्य तात्पर्यं। आह्निकस्य प्रातः केवले जलस्नानविषये अशक्तेर्वा प्रवासाद्वा अल्पज्वराद्वा एकमेव कारणाद्वा जातेन अशक्ततायाः कारणेन गृहस्थः प्रातः मंत्रस्नान

मकरोत् चेत् इदं यद्यशक्त्यादिना प्रातःकालस्नानकृतं चेत् एतस्यार्थः। अशक्तिना वा प्रवासेन वा एवंविध कारणेन वा अशक्तः गृहस्थः प्रातः-मंत्रस्नानमकरोत् चेत् मध्याह्ने स यथाविधि जलस्नानं कुर्यात्। गृहस्थः शक्तियुक्तश्चेत् जलस्नानमेव प्रत्यहं द्विः अवश्य कुर्यात्। इति तात्पर्यम्। मध्याह्ने मृत्तिकास्नानं विहितं तत्तु प्रयोगमालायामेव द्रष्टव्यम्।

---

आह्निकस्य प्रातः केवलं ० गृहस्थः इति यदुपरि लिखितं तत् न शुद्धम्। आह्निकस्य प्रातः ० अल्पज्वराद्वा एवंविधकारणात् जातेन अशक्ततायाः कारणेन यदि गृहस्थः एतत् शुद्धं॥

ब्रह्मयज्ञस्य कालकथनसमये नित्यतर्पणात्प्राग्वा इति लिखितं। तत् न शुद्धं। तर्पणात्प्राग्वा इति शुद्धम्। तर्पणं नाम माध्याह्नसंध्यायाः द्वादश-तर्पणमित्यर्थः। अत एव माध्याह्नसंध्यायाः प्राक् ब्रह्मयज्ञं कुर्यात्।

---

## (८) माध्याह्नसंध्या।

अह्नश्चतुर्थभागे माध्याह्नसंध्यां कुर्यात्। उपनयनप्रकरणेप्युक्तं। याव-द्ब्रह्मोपदेशः स्यात्तावत्संध्यादिकं नच। ततो माध्याह्नसंध्यादि सर्वकर्मसमाचरेत्। स्नानं च भोजनं तद्वत्संध्योपासनमेव च। ब्रह्मयज्ञश्च नित्यानि सामान्यस्यापि तानितु॥ ( उपासनमप्युपासन मग्निकार्यमित्यर्थः। )। यज्ञोपवीति प्राङ्मुख उपविश्य द्विराचम्य ममोपात्त दुरितक्षयद्वारा श्रीपरमेश्वर प्रीत्यर्थं माध्याह्नसंध्या मुपासिष्ये। आपोहिष्ठेति नवविधमार्जयित्वा। ॐ आपो वा इद गुँ सर्वं विश्वाभूतान्यापः प्राणावा आपःपशव आपोन्नमापो मृतमापः सम्राडापो विराडाप स्वराडापश्छंदागुँ स्यापो ज्योती गुँष्यापो यजूगुँष्याप स्सत्यमापः सर्वादेवता आपो भूर्भुवः सुवराप ॐ॥ इति जलमभिमंत्र्य। दक्षिणहस्ते जलमादाय। आपः पुनंतु पृथिवीं पृथिवीपूता पुनातु मां। पुनंतु ब्रह्मण

स्पति र्ब्रह्मपूता पुनातु मां। यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम। सर्वं पुनंतु मामापो सतां च प्रतिग्रहगुँ स्वाहा। इति प्राश्य। अथ द्विराचम्य। दधिक्राव्ण इति द्वात्रिंशन्मार्जनं कृत्वा। अर्घ्यं दद्यात् यथा। जलांजलिमादाय सर्वोत्थितः सूर्याभिमुखस्तिष्ठन् अर्घ्यमंत्रेणाभिमंत्र्य जलमध्ये जलं क्षिपेत्। ॐ हगुँसः शुचिषद्वसुरंत रिक्षसद्धोतावेदिष दतिथिर्दुरोणसत्। नृषद्वरसदृत सद्व्योम सदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्। इति प्रथमार्घ्यमंत्रः। आसत्येन रजसावर्तमानो निवेशयंनमृतं मर्त्यं च। हिरण्ययेन सवितारथेना देवो याति भुवनानि पश्यन्॥ इति द्वितीयार्घ्यमंत्रः। तृतीयार्घ्यै पूर्ववत् जलमादाय स्वतेजः संयोज्य गायत्रीमंत्रेणाभिमंत्र्य जलं क्षिप्त्वा। ॐ आपोज्यो० रोम्। इति आत्मनस्तेजः संस्थापयेत्। एवं तृतीयार्घ्यं दत्वा। कालातिक्रमश्चेत् प्रायश्चित्तार्घ्यं पूर्ववद्दद्यात्। असावादित्यो ब्रह्मेति जलहस्तः प्रदक्षिणं कुर्यात्। उपविश्याचम्य। अस्त्रोपसंहार कुर्यात्। अस्य श्री अस्त्रोपसंहारमहामंत्रस्य शिवात्मकऋषिः त्रिष्टुप्छंदः सवितादेवता। सोहमर्कः। आवायन्त्य०। ययावा०। ओं०। उद्वर्तोसि पाप्मानं मे विद्धि। उत्तिष्ठंदेवि गंतव्यमित्यादि सर्वप्रातःकालवत्कृत्वा। यथाशक्ति गायत्रीं जपित्वा। गायत्रीजपसमये आसीनः प्राङ्मुख एव पूर्ववद्यथाशक्ति जपेत्। पुन ऋष्यादि विन्यस्य करषडंगन्यासं हृदयादिन्यासं च कृत्वा। दिग्बंधमपि कृत्वा। मंदाराव्हय० गायत्रीमावाहयामि० श्रीयमावाह्यामि। (गायत्रिया गायत्रीछंदो इत्यादिं त्यजेत्। नकुर्यादित्यर्थः।) द्वादशतर्पणं कुर्यात्। यथा। धातारं तर्पयामि। अर्यमणं तर्प०। मित्रं तर्प०। वरुणं तर्प०। अंशुं तर्प०। भगं तर्प०। इंद्रं तर्प०। विवस्वतं तर्प०। पूषाणं तर्प०। पर्जन्यं तर्प०। त्वष्टारं तर्प०। विष्णुं तर्प०। इति तर्पयित्वा। उत्थाय सूर्याय पुष्पाणि दत्वा ऊर्ध्वबाहुरायताक्षः सूर्यमुपतिष्ठते। उद्वयं तमसस्परि० रुत्तमं। चित्रं देवानां०। ०तच्चक्षुर्देवहितं

पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं । जीवेम शरदः शतं । नंदाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शत गुँ शृणुवाम शरदः शतं प्रब्रवाम शरदः शतं अजीतास्याम शरदः शत जोक्च सूर्यं दृशे । य उदगान्महतोर्ण वा द्विभ्राजमानः सरिरस्य मध्यात्समावृषभो लोहिताक्षः सूर्योविपश्चिन्मनसा पुनातु । इत्युपस्थाय नमः प्राच्यै दिशे० सर्व देव नमस्कारः केशवं प्रतिगच्छति ॥ उद्यन्नद्य मित्रम ह आरोहन्नुत्तरां दिवं । हृद्रोगं मम सूर्यहरिमाणं च नाशय । शुकेषुमे हरिमाणं । रोपणाकासुदध्मसि । अथोहारिद्रवेषुमे । हरिमाणं निदध्मसि । उदगादयमादित्यः । विश्वेनसहसा सह । द्विषंतं मम रंधयन् । मो अहं द्विषतोरथं । इति सूर्यावलोकनं कृत्वा । भूः प्रपद्ये भुवःप्रपद्ये सुवःप्रपद्ये भूर्भुवः सुवःप्रपद्ये ब्रह्मप्रपद्ये ब्रह्मकोशं प्रपद्येमृतं प्रपद्ये मृतकोशं प्रपद्ये चतुर्जालं ब्रह्मकोशं यं मृत्युर्नावपश्यति तं प्रपद्ये देवान्प्रपद्ये देवपुरं प्रपद्ये परीवृतो वरीवृतो ब्रह्मणावर्मणाहं तेजसा कश्यपस्य यस्मै नमस्तच्छिरोधर्मोमूर्धानं ब्रह्मोत्तरा हनुर्यज्ञोधराविष्णुर्हृदय गुँ संवत्सरः प्रजाजननमश्विनौ पूर्वपादावत्रिर्मध्यं मित्रावरुणावपरपादावग्निः पुच्छस्य प्रथमंकांडं तत इंद्रस्ततः प्रजापतिरभयं चतुर्थगुँ सवा एष दिव्यः शाक्वरः शिशुमारस्त गुँ हय एवं वेदापपुनर्मृत्युंजयति स्वर्गं लोकं नाध्वनि प्रमीयते नाग्नौ प्रमीयते नाप्सु प्रमीयते नानपत्युः प्रमीयते लब्ध्वान्नो भवति ध्रुवस्त्वमसि ध्रुवस्यक्षितमसि त्वं भूतानामधिपतिरसि त्वं भूताना गुँ श्रेष्ठोसि त्वां भूतान्युपपर्या वर्तंते नमस्ते नमः शर्वंते नमो नमः शिशुकुमारायनमः ॥ इति शिशुकुमारं प्रार्थ्य । उपविश्य । प्रातःकालवदष्टक्षरीं पंचाक्षरीं जपेत् । [ आचम्य । अनेन माध्याह्न संध्याकर्मणा श्रीपरमेश्वरः प्रीयताम् । ]

---

गृहस्थः यद्यशक्त्यादिना प्रातःकालस्नानकृतं चेत् मध्याह्नेस्नात्वा संध्यामुपास्य ततो ब्रह्मयज्ञं कृत्वा नित्यतर्पणं कुर्यात् ।

---

**अथ चतुर्थभाग कृत्यम्** । चतुर्थभागे माध्याह्नस्नानं कुर्यात् । माध्याह्नसंध्यां कुर्यात् ।

---

## (९) पंचायतनपूजा ।

पंचमे भागे देवतार्चनं कुर्यात् । कूर्मपुराणे । यो मोहादथवालस्यदकृत्वा देवतार्चनं । भुंक्ते स याति नरकं सूकरेष्वभिजायते ॥ वाराह पद्मपुराणयोः । गृहे लिंगद्वयं नार्च्यं शालग्रामद्वयं तथा ॥ द्वे चक्रे द्वारकायास्तु नार्चेत्सूर्यद्वयं तथा ॥ शक्तित्रयं तथा नार्च्यं गणेशत्रयमेव च । शालग्रामास्समाः पूज्याः समेषु द्वितयन्नहि । विषमा नैव पूज्याः स्यु विंषमेष्वेकमेवहि ॥ **अथ पचायतनपूजा** । आदित्यमंबिकां विष्णुं गणनाथं महेश्वरं । ब्राह्मणः पूजयेत्पंच पंचयज्ञपरायणः ॥ पाद्मे । रविर्विनायकश्चंडी ईशो विष्णुस्तु पंचमः । अनुक्रमेण पूज्यंते व्युत्क्रमेतु महद्भयं ॥ तत्प्रकारमाहबप्पदेवः । शंभोर्मध्यगते हरीन हरभौ० व्यस्तास्तु हानिप्रदाः ॥ इति शंकरभागतः । ( ईशानकोणादारभ्य प्रदक्षिणमित्यर्थः ) । **दिक्स्वरूपं तु** । प्रयोगपरिजाते । देवस्यमुखमारभ्य दिशः प्राचीं प्रकल्पयेत् । तदादि परिवाराणामंगाद्यावरणस्थितिः ॥ पूज्यपूजकयोर्मध्ये प्राची प्रोक्त विचक्षणैः ॥ **उमामहेश्वर इति नामनियोजनस्य कारणाम्** । उमया युक्तो महेश्वरः उमामहेश्वर इति मध्यमपदलोप समासः । पार्वती ईश्वरमुद्दिश्य चिरकालं तपः कृतवती । सा विरहदुःखं मा प्राप्नोत्विति करुणामात्रेण शिवः स्वशरीरार्धे तामवस्थापितवान् । एतत्कथायां निर्दिष्टस्य शिवः स्वशरीरार्धे पार्वतीमवस्थापितप्रसंगस्य एव स्मरणं दर्शनं सांनिध्यं वा प्रयोगकाराय रोचते । अत एव उमामहेश्वर इति नाम नियोजनं । तन्नामनियोजनेन ईश्वरलिंगे प्राणप्रतिष्ठां कृत्वा तं लिंगं पूजयते । कारणमेवं भवेत् । अपि च यथा अर्घ्यकाले तत्पुरुषो रुद्र इत्यादि पुराणोक्तविविध कथानुरूपनामनियोजनं पूजांतर्गत प्रकारः । यथा च द्वादशनाम

पूजाकाले महादेवः कामांगनाशनः श्रीकंठः इत्यादिपुराणोक्त विविधकथानु रूपनामनियोजनं पूजांतर्गतप्रकारः। तथैव ईश्वरप्राणप्रतिष्ठायां उमामहेश्वर इति नामनियोजनं पूजांतर्गतप्रकारः। कारणमेवमपि भवेत्। **ध्याना-वाहनादि षोडशोपचाराः षोडशोपचारावा।** षोडशप्रधाना उपचाराः षोडशोपचाराः। ते एते। ध्यानं आवाहनं आसनं स्वागतं पाद्यं अर्घ्यं आचमनं मधुपर्कं पुनराचमनीयं स्नानं वासांसि भूषणं गंधं अक्षताः पुष्पाणि धूपं दीपं नैवेद्यं तांबूलं नमस्कारः। एतेषु उपचारेषु आसनस्वागतादिषुवा एतेषु उप चारेषु षोडश उपचाराः एव प्रधानाः॥ **मूलमंत्राः।** अनुष्ठानपद्धतौ। गणपतेः - ॐ गं गणपतये नमः। शिवस्य – ॐ नमःशिवाय। दुर्गायाः – ॐ ऱ्हीं दुं दुर्गायै नमः। नारायणस्य –' ॐ नमो नारायणाय। सूर्यस्य – ॐ घृणि सूर्या-दित्य॥ **अथ पूजाप्रयोगः।** [ आचम्य ] आगमार्थं तु देवानां गमनार्थं तु रक्षसां। कुरु घंटारवं तत्र देवताव्हानलांछनं॥ एष रक्षोहरः श्रीमान् सर्वासुरविनाशनः। अनेन घंटामभ्यर्च्य वादयेत मनोहरं॥ देहो देवालयः प्रोक्तो देवोजीवः सदाशिवः। त्यजेदज्ञाननिर्माल्यं सोहं भावेन पूजयेत्। इति ध्यात्वा॥ उत्तप्तोज्वलकांचनेन रचितं तुंगांगरंगस्थलं शुद्धस्फाटिक भित्तिकाविरचितै स्तंभैश्च हेमैः शुभैः। द्वारैश्चामररत्न राजखचितैः शोभावहै मंडितैस्तत्रान्यैरपि चित्रशंखधवलैः प्रोद्भासितैः स्वस्तिकैः। मुक्ताजाल विनम्र मंडपयुतै र्वज्रैश्च सोपानकै र्नानारत्न विनिर्मितैश्च कलशैरत्यंत शोभावहं॥ माणिक्योज्वल दीपदीप्ति रचितै र्लक्ष्मीविलासास्पदं ध्यायेन्मंडपमर्चनेषु सक-लेष्वेवं विधं साधकः। इति मंडपं ध्यात्वा द्वारपूजां कुर्यात्॥ ॐ पूर्वद्वारे द्वारश्रियै नमः। धात्रे नमः। विधात्रे०॥ दक्षिणद्वारे द्वारश्रियै नमः। चंडायै नमः। प्रचंडायै०॥ पश्चिमद्वारे। द्वारश्रियै०। जयाय०। विजयाय नमः॥ उत्तरद्वारे। द्वारश्रियै०। शंखनिधये नमः। पुष्पनिधये०। पूर्वसमुद्राय नमः। दक्षिणसमुद्राय०। पश्चिम समुद्राय०। उत्तर समुद्राय०। सप्त समुद्राय०। सप्त-

व्याहृतिभ्यो० । सप्तप्रकृतिभ्यो० । वस्वष्टकाय० । दिग्वष्टकाय० । पाताला-द्यष्टकाय० । अणिमाद्यष्टकाय० । गुरुभ्यो० । परमगुरुभ्यो० । परमेष्ठी गुरु-भ्यो० । सनकादियोगिभ्यो० । शंकराद्याचार्येभ्यो० । नारदादिऋषिभ्यो० । अप्सरेभ्यो० । किन्नरेभ्यो० । गं गणपतये० । क्षंक्षेत्रपालाय० । वं वास्तु पुरुषाय नमः । द्वारपालपूजां समर्पयामि । पृथ्वियामेरुपृष्ठऋषिः ०कूर्मासनाय नमः इत्यासनमभिमंत्र्य । अपक्रामंतु० । तीक्ष्णदंष्ट्र० मर्हसि । आसनं कृत्वा । आसने उपविश्येत्यर्थः । प्राणानायम्य । ( एवं गुणेत्यादेरर्थः ब्राह्मणानामनु-करणपद्धतिना क्रियते । यथा । ) अत्रकलियुगे भरतवर्षे भरतखंडे दंडकारण्य देशे शालिवाहनशके अस्मिन्वर्तमाने अमुकनाम संवत्सरे अमुकअयने अमुक ऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे एवं गुणविशेषण विशि-ष्टायां शुभपुण्यतिथौ ( इयमेव पद्धतिः । परं एतत्पद्धतिं सम्यग्ज्ञातुं हिरण्यके श्यादि प्रयोगाः द्रष्टव्याः । यद्येतत्पद्धतिः प्रयोगमालाया मेवान्यत्रास्ति तर्हि सुष्ठु भवेत् । ) धर्मार्थकाम मोक्षचतुर्विधफल पुरुषार्थफल सिद्ध्यर्थं आरोग्य निर्विघ्नैतैश्वर्यज्ञान मोक्षसिद्ध्यर्थं । सूर्य गणपत्यं बिकाशिव विष्णूनुद्दिश्य ध्याना-वाहनादिषोड शोपचारपूचां करिष्ये । देवस्य दक्षिणभागे जलकलशं निधाय । कलशस्य मुखे विष्णुः कंठेरुद्रः समाश्रितः । मूले तत्रस्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः । कुक्षौ तु सागराः सर्वे सप्तद्विपावसुंधरा । ऋग्वे दोथय जुर्वेदः सामवेदोह्यथर्वणः । अंगैश्च सहिताः सर्वे कलशंतु समाश्रिताः । अत्र गायत्रि सावित्री शांतिस्तुष्टिकरी तथा । आयांतु ममदेहस्य दुरितक्षयकारकाः । सर्वे समुद्राः सरित स्तीर्थानि जलदानदाः । गंगेच यमुने चैव गोदावरि सरस्वति । नर्मदे सिंधु कावेरि जले स्मिन्संनिधिंकुरु । कलशदेवताभ्यो नमः ध्यानावाहनादि षोडशोपचारपूजां समर्पयामि । सितमकर निषण्णां शुभ्र-वर्णां त्रिनेत्रां करधृतकल शोयत्सोत्पला भीत्य भीष्टां । विधिहरिहररूपां सेंदुकोटीरजूटां भसितसितदुकूलां जान्हवीं तां नमामि ॥ इति नमस्कुर्यात् ॥

इति कलशपूजां समर्पयामि ॥ अथ शंखपूजा । स्वेष्टदेवतास्त्रमंत्रेण शंखंप्रक्षाल्य । यं अस्त्रायफडिति ईश्वरस्य । एवमन्येषां । स्वदक्षिणभागे भूमौ चतुरस्त्रमंडलं कृत्वा व्यापक मंडलाय नम इति संपूज्य । तदुपरि प्रक्षालितमाधार न्निधाय मं वन्हिमंडलाय धर्मप्रदद्शात्मने नम इति संपूज्य तदुपरि शंखन्निधाय ॥ ॐ अं अर्कमंडलायार्थ प्रदद्वादशकलात्मने नम इति संपूज्य प्रणवेन जलमापूर्य ॐ उं सोममंडलाय कामप्रदषोडशकलात्मने नम इनि जलं संपूज्य गंधपुष्पादि भिरभ्यर्च्य चक्रमुद्रया संरक्ष्य सुरभिमुद्रया अमृतीकृत्य तार्क्ष्यमुद्रया निर्विषी कृत्य शंखमुद्रां प्रदर्श्य ॥ शंखं चंद्रार्क दैवत्यं मध्ये वरुणदेवता । पृष्ठे प्रजापतिस्तत्र अग्रे गंगा सरस्वती ॥ पांचजन्यायविद्महे पद्मगर्भायधीमहि । तन्नः शंखः प्रचोदयात् ॥ इति शंखगायत्र्या त्रिवारमभिमंत्र्य । त्रैलोक्यां यानि तीर्थानि वासुदेवस्य चाज्ञया । शंखे तिष्ठंति राजेंद्र तस्माच्छंखं प्रपूजयेत् ॥ त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे । रक्षार्थं सर्वदेवानां पांचजन्य नमोस्तुते ॥ गर्भा देवारिनारीणां विशीर्यंते सहस्रधा । तव नादेन पाताले पांचजन्य नमोस्तुते ॥ विलयं यांति पापानि हिमवद्भास्करोदये । दर्शनादेव शंखस्य किं पुनः स्पर्शनेन तु ॥ नत्वा शंखं करे कृत्वा मंत्रै रेवतु वैष्णवैः । यः स्नापयति गोविंदं तस्य पुण्यमनंतकं ॥ शंखतीर्थं कल शोदके किंचिन्निक्षिप्य पूजोपकरणं संप्रोक्ष्य देवस्य मूर्ध्नि त्रिः प्रोक्ष्यात्मानं प्रोक्ष्य । शंखमध्ये स्थितं तोयं भ्रामितं केशवोपरि । अंगलग्नमनुष्याणां ब्रह्मत्यायुतं दहेत् ॥ इति शंखपूजाविधिः ॥ अथ पीठपूजा । ॐ आधारशक्त्यै नमः । मूलप्रकृत्यै नमः । कूर्माय । अनंताय । वास्तुपुरुषाय । पृथिव्यै । सुधार्णवाय । नवरत्नमय द्वीपाय । स्वर्णपर्वताय । नंदनोद्यानाय । कल्पपादपेभ्यो । मणिमंडपाय । रत्नमंदिराय । स्वर्णवेदिकायै । रत्नसिंहासनाय । श्वेतच्छत्राय । धवलचामराय । धर्माय । ज्ञानाय । वैराग्याय । ऐश्वर्याय । अधर्माय । अज्ञानाय । अवैराग्याय । अनैश्वर्याय । अव्यक्त विग्रहाय । आनंद

कंदाय । सविन्नालाय । षट्त्रिंशतत्वात्मक पद्माय । प्रकृतिमयपत्रेभ्यो नमः । विकारामयकें सरेभ्यो । पंचाशद्वर्ण बीजाढ्य सर्वतत्व स्वरूपायै कर्णिकायै नमः । अं अर्कमंडलाय द्वादशकलात्मने । उं सोममंडलाय षोडशकलात्मने । मं वन्हि मंडलाय दशकलात्मने । सं सत्वाय । रं रजसे । तं तमसे । मां मायायै । विं विद्यायै । अं आत्मने । अं अंतरात्मने । पं परमात्मने । ॐ ऱ्हीं ज्ञानात्मने नमः । पीठपूजां समर्पयामि । अथ पूजाक्रमः । स्मृत्यंतरे । रविर्विनायकश्चंडी ईशो विष्णुस्तु पंचमः । अनुक्रमेण पूज्यंतेऽव्युत्क्रमेतु महद्भयमिति ॥ **अथ सूर्यपूजांकरिष्ये** । नवशक्तिपूजां करिष्ये । ॐ दीप्तायै नमः । सूक्ष्मायै । जयायै । भद्रायै । विभूत्यै । विमलायै । अमोधायै । विद्युतायै । सर्वतोमुख्यै नमः । ओन्नमो भगवते सर्वभूतात्मने सकलगुण शक्तियुक्ताय योगपद्मपीठात्मने नमः सुवर्णपीठं कल्पयामि । स्वात्मसंस्थमजं शुद्धं त्वामद्य सुदिवाकर । अरण्यामिवहव्या शंमूर्तावा वाहयाम्यहं ॥ ॐ भूर्भुवः सुवरों सशक्ति सांग सायुधसवाहन सपरिवार सर्वालंकार भूषित श्री भास्करमूर्ते अत्रागच्छागच्छ आवाहयिष्ये । आवाहयामि । आवाहितो भव । संस्थापितो भव । सन्निहितो भव । सन्निरुद्धो भव । अवकुंठितो भव । अमृतीकरणो भव । व्याप्तो भव । सुप्रसन्नो भव । क्षमस्व । सान्निध्यं कुरु । भास्कराय विद्महे महद्युतिकराय धीमहि तन्नो आदित्यः प्रचोदयात् । इदमर्घ्यं । देवभागऋषिः गायत्रीछंदः सूर्यो देवता । ॐ सत्यतेजो ज्वालामणि हुं फट् स्वाहा । हृदया० । ब्रह्मतेजो ज्वालामणि हुं फट् स्वाहा । शिर । विष्णुतेजोज्वालामणि हुं फट् स्वाहा । शिखा । रुद्रतेजोज्वालामणि हुं फट् स्वाहा । कव । वह्नितेजोज्वालामणि हुं फट् स्वाहा । नेत्र । सहस्रतेजोज्वालामणि हुं फट् स्वाहा । अस्त्र । अरुणोरुण पंकजो निषण्णः । कमले भीतिवरौकरैर्दधानः । स्वरुचाहित मंडल स्त्रिनेत्रो रविराकल्प शताकुलोवतान्नः ॐ घृणि सूर्य आदित्य । इत्यष्टाक्षरमंत्रंमूर्ति हृदयं स्पृष्ट्वा जपेत् । ॐ ऱ्हीं । क्रों यंरं लंवं शंषं सं हों सं हं सः । सूर्यस्य

प्राणाइहप्राणाः सूर्यस्य जीव इहस्थितः सूर्यस्य सर्वेंद्रियाणि वाङ्मनश्चक्षु श्रोत्र जिव्हाघ्राणप्राणा इहायांतु सुखं चिरं तिष्ठंतु स्वाहा। इति हृदयं स्पृष्ट्वा त्रिवारं जपेत्। इति प्राणप्रतिष्ठा। आवरण पूजां करिष्ये। ॐ सत्यतेजो ज्वालामणि हुंफट् स्वाहा। हृ। ब्रह्मतेजो। शि। विष्णुतेजो। शिखा। रुद्रतेजो। क। वह्नितेजो। ने। सहस्रतेजोज्वा। अस्त्र॥ इति प्रथमावरणं॥ रवये नमः। भानवे। भास्कराय। सूर्याय। उषायै। प्रज्ञायै। प्रभायै। संध्यायै॥ इति द्वितीयं॥ अदित्याय। चंद्राय। कुजाय। बुधाय। बृहस्पतये। शुक्राय। शनैश्चराय। राहवे। केतवे॥ इति तृतीयं॥ ब्राह्मै। माहेश्वर्यै। कौमार्यै। वैष्णव्यै। वाराह्यै। इंद्राण्यै। चामुंडायै। महालक्ष्म्यै॥ इति चतुर्थं॥ इंद्राय। अग्नये। यमाय। नैर्ऋतये। वरुणाय। वायवे। सोमाय। ईशानाय। अनंताय। ब्रह्मणे॥ इति पंचमावरणं॥ द्वादशनाम पूजां करिष्ये। सहस्रकिरणाय नमः। सूर्याय। तपनाय। सवित्रे। रवये। विकर्तनाय। जगच्चक्षुषे। द्युमणये। तरणये। तिग्मदीधितये। द्वादशात्मने। त्रयीमूर्तये॥ द्वादशनामपूजां समर्पयामि॥ भास्करमूर्तये नम इति षोडशोपचार पूजां कुर्यात्॥ इति सूर्य जा॥ **अथ विनायक पूजा**। तीव्रायै। ज्वालिन्यै। नंदायै। भोगदायै। कामरूपिण्यै। उग्रायै। तेजोवत्यै। विघ्ननाशिन्यै। नवशक्तिपूजां समर्पयामि। ॐ नमो भगवते सर्वभूतात्मने सकल गुण शक्ति युक्ताय योगपद्मपीठात्मने नमः। सुवर्णपीठं कल्पयामि। स्वात्म संस्थमजंशुद्धं त्वामद्य गणनायक। अरण्यामिवहव्याशं मूर्तावावाहयाम्यहं। सशक्ति सांगसायुधसवाहन सपरिवार सर्वालंकार भूषित श्री सिद्धिविनायक मूर्ते अत्रागच्छागच्छावाहयिष्ये। सिद्धिविनायकमावाहयामि। आवाहितो भवेत्यादि पूर्ववत्। एकदंतायविद्महे वक्रतुंडाय धीमहि। तन्नोदंतिः प्रचोदयात्॥ इदमर्घ्यं॥ गणकऋषिः। गायत्रीछंदः। गणपतिर्देवता। मूलेन षडंगन्यासः। रक्तोरक्तांगरागां शुककुसुमयुतस्तुंदिलश्चंद्रमौलिर्नेत्रैर्युक्तस्त्रिभिर्वाङ् मनकर चरणो

बीजपुरोत्तवास: । हस्ताग्रांक्लृप्तपाशांकुशरदवरदो नागवक्त्रोहि भूषो देवः पद्म-
सनो नोभवतु नतसुरो भूतये विघ्नराजः ॥ इति ध्यात्वा । मूलं यथाशक्ति
जपित्वा । आवरणपूजां कुर्यात् ॥ अंगैः ( हृदयादिन्यासैः ) प्रथमावरणं ॥
गणाधिपाय । गणेशाय । गणनाथाय । गणक्रीडाय । गजकर्णकाय । इति
द्वितीयं ॥ वक्रतुंडाय । एकदंताय । महोदराय । गजाननाय । विकटाय ।
विघ्नराजाय । धूम्रवर्णाय ॥ इति तृतीयं ॥ ब्राह्मै । माहेश्वर्यै । कौमार्यै ।
वैष्णव्यै । वाराह्यै । इंद्राण्यै । चामुंडायै । महालक्ष्म्यै ॥ इति चतुर्थं ॥
इंद्रायनम० इति पंचमं ॥ सुमुखाय । एकदंताय । कपिलाय । गजकर्णकाय ।
लंबोदराय । विकटाय । विघ्नराजाय । गणाधिपाय । धूमकेतवे । गणाध्यक्षाय ।
भालचंद्राय । गजाननाय नमः इनि द्वादशनामपूजां समर्पयामि । धूपदीपादि
सर्वोपचारान्कुर्यात् । गणानांत्वेति मंत्रेणवा जपपूजादिकं कुर्यात् ॥ इति
विनायकपूजा ॥ **अथ दुर्गापूजा** ॥ प्रभायै । मायायै । जयायै । सूक्ष्मायै ।
शुद्धायै । नंदिन्यै । सुप्रभायै । विजयायै । सर्वसिद्धिदायै । नवशक्तिपूजां
समर्पयामि । ॐ नमो भगवत्यै सर्वभूतात्मिकायै सकलशक्ति गुणयुक्तायै
योगपद्मपीठात्मिकायै नमः सुवर्णपीठं कल्पयामि । स्वात्मसंस्थामजां शुद्धां
त्वामद्यपरमेश्वरी । अरण्यामिवहव्याशं मूर्तावावाहयाम्यहं । सशक्तीत्यादि ।
आवाहनादिमुद्रांप्रदर्श्य । कात्यायनाय विद्महे कन्यकुमारि धीमहि । तन्नो-
दुर्गिः प्रचोदयात् ॥ इदमर्घ्यं ॥ नारदऋषिः गायत्रीछंदः । दुर्गादेवता ।
ॐ ऱ्हीं दुं दुर्गायै ऱ्हां । हृ । ॐ ऱ्हीं दुं दुर्गायै ऱ्हीं । शि । ॐ ऱ्हूं
दुं दुर्गायै ऱ्हूं । शिखा । ॐ ऱ्हीं दुं दुर्गायै ऱ्हैं । कव । ॐ ऱ्हीं दुं
दुर्गायै ऱ्हौं । नेत्र । ॐ ऱ्हीं दुं दुर्गायै ऱ्हः । अस्त्राय ॥ शंखारिचाप
शरभिन्नकरां त्रिनेत्रां तिग्मेनरां शुकलयावि लसत्किरीटां । सिंहस्थितां ससुर
सिद्धिनतां च दुर्गां दूर्वानिभां दुरितवर्गह रात्रमापि ॥ ॐ ऱ्हीं दुं दुर्गायै
नमः । इति जपः । अथावरणपूजा । पूर्वोक्तांगमंत्रैः प्रथमावरणं । जयायै न ।

विजयायै । कीर्त्यै । प्रभायै । श्रद्धायै । मेधायै । श्रुत्यै । इति द्वितीयं । चक्राय । शंखाय । गदायै । पाशाय । अंकुशाय । शराय । धनुषे । इति तृतीयं । इंद्रादिभिश्चतुर्थं ॥ वज्राय । शक्तये । दंडाय । खड्गाय । पाशाय । अंकुशाय । गदायै । त्रिशूलाय । चक्राय । पद्माय ॥ इति पंचमं ॥ दुर्गायै । शांत्यै । शांभव्यै । भूतिदायिन्यै । शंकरप्रियायै । नारायण्यै । भद्रकाल्यै । शिवदूत्यै । महालक्ष्म्यै । महामायायै । योगनिद्रायै । चंडिकायै । इति द्वादश नामपूजा । अथषोडशोपचारान्कुर्यात् । इति दुर्गापूजा ॥ **अथोमा महेश्वर पूजा** । नवशक्तिपूजां करिष्ये । वामायैनमः । ज्येष्ठायै । रौद्रियै । काल्यै । कलविकरिण्यै । बलविकरिण्यै । बलप्रमथिन्यै । सर्वभूतदमन्यै । मनोन्मन्यै नमः । नवशक्तिपूजां समर्पयामि । स्वात्म संस्थमजं शुद्धं त्वामद्य परमेश्वर । अरण्यामिवहव्याशं मूर्तावावा हयाम्यहं ॥ ॐ भूर्भुवः सुवरों सशक्ति सांग-सायुधसवाहन सपरिवार सर्वालंकार भूषित श्री सांबसदाशिव अत्रागच्छागच्छ आवाहयिष्ये । सांबसदाशिवमावाहयामि इत्यादि आवाहनमुद्राः प्रदर्श्य । तत्पु-रुषाय विद्महे महादेवाय धीमहि । तन्नोरुद्रः प्रचोदयात् ॥ इदमर्घ्यं ॥ वामदेवऋषिः पंक्तिच्छंदः सदाशिवरुद्रोदेवता । मूलेन षडंगं विन्यस्य । वंदे हरं वरदशूलकपालहस्तं साभीतिमद्रिसुतयो ज्वलेदहकांत्या । वामोरुपीठगतया निजवामबाहुं न्यस्तारुणोत्पलयुजा परिलब्धदेहं ॥ शक्तिपंचाक्षरीजपः । ॐ र्‍हीं क्रों यरलवशषस हों संहंसः । उमामहेश्वरस्य प्राणा इहप्राणाः उमाम-हेश्वरस्य जीव इहस्थितः । उमामहेश्वरस्य सर्वेंद्रियाणि वाङ्मनः प्राणा इहायांतु सुखं चिरं तिष्ठंतु स्वाहा । इति देवस्य हृदयं स्पृष्ट्वा त्रिर्जपेत् । मूलमुच्चार्य उमामहेश्वराय नमः । एतत्ते आसनमुपक्लृप्तमत्रास्तां भगवन् । इत्यासनं दत्वा स्वागतं पाद्यं अर्घ्यं आचमनं मधुमर्कं पुनराचमनीयं । स्नानं वाससी । इमानि भूषणानि । गंधं । अक्षतान् । पुष्पाणि । धूपं । दीपं । नैवेद्यं । तांबूलं । नमस्कारान् । स्वामिन्सर्वजगन्नाथ करुणाकर शंकर । यावत्त्वां

पूजयिष्यामि तावत्त्वं सुस्थिरो भव ॥ इति षोडशोपचारान् कृत्वा आवरण पूजां कुर्यात् । ॐ । न्ह । नं । शि । मं । शि । शिं । क । वां । ने । यं । अं ॥ इति प्रथमं ॥ अथ द्वितीयं ॥ हृल्लेखायै । गगनायै । रक्तायै । करालिकायै । मनोच्छुष्मायै । गायत्र्यै । सावित्र्यै । सरस्वत्यै ॥ इंति द्वितीयं ॥ वृषभायै । क्षेत्रपालाय । चंडेश्वराय । गुहाय । नंदिन्यै । गणाधिपतये । सेनाधिपतये ॥ इति तृतीयं ॥ ब्राह्मेति चतुर्थं ॥ इंद्राय सुराधिपतये । अग्नये तेजोधिपतये । यमाय प्रेताधिपतये । नैऋतये रक्षोधिपतये । वरुणाय जलाधिपतये । वायवे प्राणाधिपतये । सोमाय नक्षत्राधिपतये । ईशानाय विद्याधिपतये । अनंताय नागाधिपतये । ब्रह्मणे लोकाधिपतये ॥ इति पंचमावरणं ॥ द्वादशनामपूजां करिष्ये । महादेवाय नमः । महेश्वराय । शंकराय । वृषभध्वजाय । कृत्ति वाससे । कामांगनाशनाय । देवदेवेशाय । श्रीकंठाय । हराय । पार्वतीपतये । रुद्राय । शिवायनमः ॥ इति द्वादशनामपूजां समर्पयामि ॥ धूपदीपादि सर्वो पचारान्कुर्यात् । अथ श्रा स्नानं कृत्वा । ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः । ध्रुवंत इंद्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवं ॥ युवं वस्त्राणि पीवसावसाथे युवोरच्छि द्रामंतवोहसर्गाः । अवातिरतमनृतानि विश्वऋतेन मित्रावरुणासचेथे ॥ वस्त्रं समर्प यामि । यज्ञोपवीतं परमं पवित्रं प्रजापते र्यत् सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुंच शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ उपवीतं । हिरण्यपात्रमधोः पूर्णं दधाति । मधव्यो सानीति एकधा ब्रह्मण उपहरति । एकदैव यजमान आयुस्तेजो दधाति ॥ आभरणं । गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीं । ईश्वरी गुँ सर्वभूतानां तामिहोपव्हये श्रियं ॥ गंधान्स । अर्चतप्रार्चतप्रियमेधा सोअर्चत । अर्चंतु पत्रका उत पुरन्न धृष्ण वर्चत । अक्षतान् । आयनेते परायणे दर्वा रोहंतु पुष्पिणीः । न्हदाश्च पुंडरीकाणि समुद्रस्य ग्रहा इमे ॥ पुष्पाणि । तत आवरणपूजा द्वादशनामाष्टोत्तर सहस्रनामपूजां यथाशक्ति कृत्वा ॥ वनस्पतिर सोत्पन्नो गंधाढ्यो धूप उत्तमः । आघ्रेयः सर्वदेवानां धूपोयं

प्रतिगृह्यतां ॥ धूपमाघ्रापयामि । ज्योतिः शुक्लश्च तेजश्च देवानागुँ सततं प्रिया । प्रभाकरो महातेजा दीपोयं प्रतिगृह्यतां ॥ साज्यं त्रिवर्ति संयुक्तं वह्निना योजितं मया । गृहाण मंगलं दीपं त्रैलोक्यतिमिरापहं ॥ दीपं दर्शयामि । ततो नैवेद्यं पुरतो निधाय । ॐ भूर्भुवः सुवः इति प्रोक्ष्य । सत्यंत्वर्तेनेति परिषिच्य । सशक्ति सांगसायुध सवाहन सपरिवाराय श्री उमामहेश्वराय भक्ष्यभोज्यं सोपहारं महानैवेद्यं निवेदयामि । अमृतोपस्तरणमसि स्वाहा । प्राणादिपंचमुद्राः प्रदर्शयेत् । कनिष्ठानामिकांगुष्ठैः प्राणाय स्वाहा । अनामिकामध्यमांगुष्ठैः अपानाय स्वाहा । मध्यमातर्जन्यंगुष्ठैः व्यानाय स्वाहा । कनिष्ठतर्जन्यंगुष्ठैः उदानाय । सर्वैः समानाय स्वाहा ॥ इति पंचमुद्राः प्रदर्श्य मूल मुच्चार्य देवस्यत्वेति निवेद्य उमामहेश्वराय नमः नैवेद्यं उद्वासयामि । अमृतापिधानमसि स्वाहा । चंडेश्वराय नम इति निर्माल्यं विसृज्य हस्तप्रक्षालनं । पुनराचमनं । पूगीफल समायुक्तं नागवल्ली दलैर्युतं । कर्पूरचूर्ण संयुक्तं तांबूलं प्रतिगृह्यतां ॥ इति तांबूलं । मंगलनीराजनं । प्रदक्षिणा । नमस्कारं । छत्रचामरान्समर्पयामि । आवाहनं न जानामि न जानामि तवार्चनं । पूजाक्रमं न जानामि तव दासोस्मि सर्वदा ॥ हरिणा चरणौ पुरा न दृष्टौ विधिना तेन शिरोपि ते न दृष्टं । कथमीश करोमि सांगपूजां कृपया पाहि विचार्य किंकरं मां ॥ इति स्तुत्वा । देवदेव जगन्नाथ हृदये मम निर्मले । यागदेशात्समागत्य निवासं कुरु लीलया ॥ हृत्पद्मकर्णिकामध्ये देव्या सहमहेश्वर । प्रविशत्वं महादेव सर्वैरावरणैः सह ॥ इति पुष्पांजलौ समागतं विभाव्य आत्मनि विसर्जयेत् । इति शिवपूजा विधिः ॥ **अथ विष्णुपूजा** । नवशक्तिपूजां करिष्ये । विमलायै । उत्कर्षिण्यै । ज्ञानायै । क्रियायै । योगायै । प्रह्व्यै । सत्यायै । ईशानाय । अनुग्रहायै ॥ इति नवशक्ति पूजां समर्पयामि । ओन्नमो भगवते इत्याद्यावाहनांतं कृत्वा । स्वात्मसंस्थमजं शुद्धं त्वामद्य पुरुषोत्तम । अरण्यामिवहव्याशं मूर्तावावाहयाम्यहं ॥ सशक्तीत्यादि । नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः

प्रचोदयात् ॥ इदमर्घ्यं ॥ साध्यानारायणऋषि रित्यादि अष्टाक्षरीजपांतं कृत्वा वरणपूजां कुर्यात् । कुद्रोलकायस्वाहेत्यादि करषडंगन्यासः इति प्रथमं ॥ वासुदेवाय । संकर्षणाय । प्रद्युम्नाय । अनिरुद्धाय । शांत्यै । श्रियै । सरस्वत्यै ॥ इति द्वितीयं ॥ चक्राय । शंखाय । गदायै । पद्मायै । मुसलाय । कौस्तुभाय । खड्गाय । वनमालायै ॥ इति तृतीयं ॥ ध्वजाय । वैनतेयाय । शंखनिधये । पुष्पनिधये । दुर्गायै । विघ्नेश्वराय । आर्यकाय । विष्वक्सेनाय ॥ इति जतुर्थं ॥ इंद्रादिभिः पंचमं ॥ द्वादशनामपूजां करिष्ये । केशवाय नमः । नारायणाय । माधवाय । गोविंदाय । विष्णवे । मधुसूदनाय । त्रिविक्रमाय । वामनाय । श्रीधराय । हृषीकेशाय । पद्मनाभाय । दामोदराय ॥ द्वादशनाम पूजां समर्पयामि ॥ ध्यानावाहनादि षोडशोपचारा न्कुर्यात् ॥ इति विष्णुपूजा विधिः ॥ [ आचम्य । अनेन सूर्यगणपत्यं बिकाशिव विष्णुपूजनेन कर्मणा श्री परमेश्वरः प्रीयताम् । ]

---

**लिंगार्चानां विरोधाः** । ( निर्णय सिंधु धर्म सिंधुभ्यां अस्माभिः संग्रहीताः । ) लिंगार्चा अहरहः अर्चनीयाः । ता विरोधेभ्यो रक्षणीयाः । तासां विरोधाः । मद्यस्पर्शः चंडालस्पर्शः अग्निस्पर्शः शवस्पर्शः पापिस्पर्शः अपुण्यजन स्पर्शः विप्ररक्तदूषणं मानाभावस्य कारणं खंडः स्फोटः चलनं स्थान भ्रंशः पतनं एकाहपूजाविहतिः एकाहाधिकाह पूजाविहतिः पशुस्पर्शः रजस्वलास्पर्शः चोरस्पर्शः दुष्ट भूमिषु पतनं अन्यमंत्रार्चनं गात्रसंयोगः देवायतनस्य शिखरच्छेदः देवायतनस्य गृहवापी कूपतडागारामच्छेदश्च ।

---

## (१०) अथ वैश्वदेवप्रयोगः ।

**दक्षः** । पंचमे च तथाभागे संविभागो यथार्हतः । पितृदेवमनुष्याणां कीटानां चोपदिश्यते । पंचमभागे वैश्वदेवहोमं विवाहित पुरुष एव कुर्यात् ।

वैश्वदेव होमे वैश्वदेवो **बलिहरणः** पंचमहायज्ञाश्च समागताः। **शातातपः**। लौकिके वैदिके वापि हुतोत्सृष्टे जले क्षितौ। वैश्वदेवः प्रकर्तव्यः पंचसूनानुपतये॥ पंचसूना गृहस्थस्य अहरहः वर्तते। सूनाः हिंसास्थानानि। पंचसूनानां पावनार्थाय वैश्वदेवः पंचमहायज्ञाश्च कर्तव्याः। पंचसूनाः। कंडनी पेषणी चुल्ली जलकुंभी उपस्करः॥ **वैश्वदेवार्थाः आहाराः** जुहुयात्सर्पिषाभ्यक्तं तैलक्षार विवर्जितं। दध्यक्तं पयसाक्तं वा तदभावेंबुनापिवा॥ अलाभे येन केनापि फलशाकोदकादिभिः। पयोदधिघृतैः कुर्यात् वैश्वदेवं स्त्रुवेण तु॥ हस्तेनान्नादिभिः कुर्याद्द्भि रंजलिनाजल इति॥ गृह्यपरिशिष्टे। शकंवा यदि वा पत्रं मूलं वा यदि वा फलं। संकल्पयेद्यदाहारं तेनैव जुहुयादपीति॥ आपस्तंबः। न क्षार लवण होमो विद्यते तथा वरान्न संसृष्टस्य हविष्यस्य होमः। यदि एकदेव स्यादुत्तरतो भस्म मिश्रानंगारान्निरूह्य तेषु जुहुयादिति गृह्यसूत्रे॥ पुनः गृह्यसूत्रं। सायं प्रातर्यदशनीयंस्या त्क्रियेत्वौ पासने वा पचनेवा होमं एतावदेव तानाक्षारलवण वरान्नसं सृष्टस्य नतु होमं परिचक्षते काममितरेष्वायतनेषु॥ **कालविशेषः**। वृद्धावादौ क्षयेचांते दर्शेमध्ये महालये। एकोत्तिष्टे निवृत्तेतु वैश्वदेवो विधीयते॥ **वैश्वदेवस्य कर्ता**। विवाहानंतरं वैश्वदेवं कुर्यात्। एक एव कुर्यात्। **गौणकर्तारः**। अत्रिः। पुत्रो भ्राता तथा ऋत्विक् शिष्यः श्वशुरमातुलाः। पत्नी श्रोतिय याज्याश्च द्रष्टास्ते बलिकर्मणीति॥ एते अपि विवाहानंतरमेव गौणकर्तारो भवंति॥ गृहे कर्त्रंतराभावे प्रवसता स्वेनैव कर्तव्यमित्याह बोधायनः॥ प्रवासं गच्छतो यस्य गृहे कर्ता न विद्यते। पंचानां महतामेषां सयज्ञैस्सह गच्छतीति॥ **वैश्वदेवं चतुर्विधं**। अन्नाभावे वैश्वदेवं तंडुलेन जलेन वा अथवा मंत्रमुच्चार्य वैश्वदेवं चतुर्विधमिति॥ **कात्यायनः**। सायंप्रातर्वैश्वदेवः कर्तव्यो बलिकर्मच। अनश्नतापि सततमन्यथा किल्बिषी भवेत्॥ **पंचयज्ञानां नामानि**। देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञश्च। एते पंचमहायज्ञाः अहरहः प्रयोक्तव्याः।

प्रयोक्तारं :परमं प्रापयंति । मनुष्ययज्ञ वर्ज्यमन्ये प्रत्यहं सत्कृत्क्रियंते । मनुष्य यज्ञ : प्रत्यहं द्विः कर्तव्यः प्रातः रात्रौच ॥ **अथ वैश्वदेव प्रयोगः** ॥ आचम्य प्राणानायम्य देशकालौ संकीर्त्य मम समस्ताहौरः पंचसूना दोष परिहारार्थं श्री परमेश्वरप्रीत्यर्थं वैश्वदेव होमं करिष्ये । ( लौकिकाग्निं वैदिकाग्निं जलं क्षितिं वापुरतः कृत्वा । औपासनाग्निमुपसमाधाय । यथा ) ॐ आजुव्हानः सुप्रतीकः ० सीदत । उद्बुद्ध्यस्वाग्ने ० मेतं । ॐ भूर्भुव ० सुवरोमू अग्निं प्रतिष्ठापयामि इति द्वाभ्यां मंत्राभ्यामारोपित समिधं तत्र प्रक्षिप्य । अग्नय लंकरणांतं कृत्वा यथा । जुष्टोदमूना अतिथिर्दुरोणे ० अथाग्नेरीशान मारभ्य० ॐ देवस्यत्वा ० इत्यादिभिः मंत्रैः सह दर्भैः परिस्तीर्थ । ० तयोरधः । स्वाहा ० । ॐ जुषस्वनः ० । अदितेनुमन्यस्वेत्यादिभिः परिषिच्य । ॐ चत्वारिश्रृंगा ० । अग्नये नमः ० श्रीयज्ञेश्वराय नमः गंधपुष्पाक्षतान् समर्पयामि । एवमग्निमलं कुर्यात् ॥ अंगुष्ठपर्वमात्रं चरुमादाय हस्तेनेव जुहोति । अग्नेय स्वाहा । अग्नय इदं ॥१॥ सोमाय स्वाहा । सोमायेदं ॥२॥ ध्रुवाय स्वाहा । ध्रुवायेदं ॥३॥ ध्रुवाय भूमाय स्वाहा । ध्रुवाय भूमायेदं ॥४॥ ध्रुव क्षितये स्वाहा । ध्रुवक्षितय इदं ॥५॥ अच्युतक्षितये स्वाहा । अच्युत क्षितय इदं ॥६॥ ईशानाय स्वाहा । ईशानायेदं ॥७॥ जयंताय स्वाहा । जयंतायेदं ॥८॥ धर्माय स्वाहा धर्मायेदं ॥९॥ धर्मरुचये स्वाहा । धर्मरुचय इदं ॥१०॥ धान्वंतराय स्वाहा । धान्वंतरायेदं ॥११॥ विद्यायै स्वाहा । विद्याया इदं ॥१२॥ अंबिकायै स्वाहा । अंबिकाया इदं ॥१३॥ हरये स्वाहा । हरय इदं ॥१४॥ गणेभ्यः स्वाहा । गणेभ्य इदं ॥१५॥ गणपतिभ्यः स्वाहा । गणपतिभ्य इदं ॥१६॥ वर्षभ्यः स्वाहा । वर्षभ्य इदं ॥१७॥ विश्वेभ्यो देवेभ्यः स्वाहा । विश्वेभ्यो देवेभ्य इदं ॥१८॥ साध्येभ्यो देवेभ्यः स्वाहा । साध्येभ्यो देवेभ्य इदं ॥१९॥ सर्वेभ्यो देवेभ्यः स्वाहा । सर्वेभ्यो देवेभ्य इदं ॥२० सर्वाभ्यो देवताभ्यः स्वाहा । सर्वाभ्यो देवताभ्य इदं ॥२१॥ ॐ भूः स्वाहा । अग्नय

इदं ॥२२॥ ॐ भुवः स्वाहा । वायव इदं ॥२३॥ ओ गुँ सुवः स्वाहा । सूर्यायेदं ॥२४॥ ॐ भूर्भुवः सुवः स्वाहा । प्रजापतय इदं ॥२५॥ इति पंचविंशत्याहुतीर्हुत्वा । ततो बलिहरणार्थेषु वक्ष्यमाणस्थानेषु यथा । अग्नेः पश्चाद्भूमौ चतुरस्रमंडलं कृत्वा तत्तत्स्थानेषु पत्न्या गंधपुष्पाक्षतैः परिसमूह्य पर्युक्ष्य अभ्यर्चितेषु स्वयं पुरस्तादुपरिष्टाच्चोभयतः परिषेकं कृत्वा वक्ष्यमाण प्रकारेण बलिहरणं कुर्यात् । तत्रादौ चतुर्दिक्षुमध्ये च पंचबलयः । ॐ धर्माय स्वाहा । अधर्माय स्वाहा । कद्रुवेनागमात्रे स्वाहा । सर्पेभ्यः स्वाहा । ब्रह्मणे स्वाहा ॥५॥ इति पंच । अथेशानमारभ्य प्रदक्षिणाकारेण एकविंशति बलयः । अचलायै देव्यै स्वाहा । वास्तुपाल्यै सगणायै स्वाहा । अद्भ्यः स्वाहा । वरुणाय स्वाहा । प्रजापतये स्वाहा । परमेष्ठिने स्वाहा । ऋषभाय स्वाहा । रुद्राय स्वाहा । रुद्राण्यै स्वाहा । ओषधिवनस्पतिभ्यः स्वाहा । दक्षो देवयजनेभ्यः स्वाहा । कामाय स्वाहा । भगाय स्वाहा । श्रियै स्वाहा । विष्णवे स्वाहा । ग्रहाय स्वाहा । ग्रहराजाय स्वाहा । धनधनभ्या गुँ स्वाहा ॥१८॥ वैश्रवणाय स्वाहा । श्रियै स्वाहा । पुष्ठ्यै स्वाहा ॥२१॥ पुनरपि ईशानादि पूर्ववत्पंचदश । उलूखलमुसलाभ्या गुँ स्वाहा । दृषदुपलाभ्यागुँ स्वाहा । समूहन्यै देव्यै स्वाहा । गुह्याभ्यः स्वाहा । अवसानेभ्यः स्वाहा । अवसानुपतिभ्यः स्वाहा । सर्पदेव जनेभ्यः स्वाहा । सर्वभूतेभ्यः स्वाहा । अंतरिक्षाय स्वाहा । अवांतरिक्षाय स्वाहा । धात्रे स्वाहा । विधात्रे स्वाहा । भूत्यै स्वाहा । प्रभूत्यै स्वाहा । यदेजतिजगतियच्चचेष्टति नाम्नो भागोयन्नाम्ने स्वाहा ॥१५॥ अथ मंडलमध्ये प्रागपवर्गा श्चतुस्त्रिंशद्बलयः । ज्येष्ठाभ्या गुँ स्वाहा । करस्कराभ्या गुँ स्वाहा । श्रियै स्वाहा । विष्णवे स्वाहा । रुद्राय स्वाहा । वसुभ्यः स्वाहा । पशुपतये स्वाहा । वास्तोष्पतये स्वाहा । पृथिव्यै स्वाहा । अंतरिक्षाय स्वाहा । दिवे स्वाहा । सूर्याय स्वाहा । चंद्रमसे स्वाहा । नक्षत्रेभ्यः स्वाहा । अद्भ्यः । ओषधीभ्यः । वनस्पतिभ्यः । चराचरेभ्यः । परिप्लवेभ्यः । सरीसृपेभ्यः ।

देवेभ्यः। कालेभ्यः। लोकेभ्यः। वेदेभ्यः। देवेभ्यः। ऋषिभ्यः ॥२६॥ वसुभ्यः। रुद्रेभ्यः। आदित्येभ्यः। इंद्राय ॥३०॥ बृहस्पतये। प्रजापतये। ब्रह्मणे। आयतनवते स्वाहा ॥३४॥ अथ दक्षिणभागे दर्भेषु प्राचीनावीनि पितृभ्यः स्वधा नमः स्वाहा। पितामहेभ्यः स्वधा ०। प्रतितामहेभ्यः स्वधा ०। मातृभ्यः स्वधा नमः ०। पितामहीभ्यः स्वधा ०। प्रपितामहीभ्यः स्वधा नमः स्वाहा। मातामहेभ्यः स्वधा ०। मातुः पितामहेभ्यः स्वधा ०। मातुः प्रपितामहेभ्यः स्वधा ०। मातामहीभ्यः ०। मातुः पितामहीभ्यः ०। मातुः प्रपितामहीभ्यः ०। अथाप उपस्पृश्य यज्ञोपवीती। उदग्दिशि। नमो रुद्राय भगवते स्वाहा। अथ दिक्षु। प्राच्यै दिशे स्वाहा। दक्षिणायै दिशे स्वाहा। प्रतीच्यै दिशे स्वाहा। उदीच्यै दिशे स्वाहा। ऊर्ध्वायै दिशे स्वाहा। अधरायै दिशे स्वाहा। आग्नेयादि विदिक्षु। अग्नये स्वाहा। निर्ऋतये स्वाहा। वायवे स्वाहा। ईशानाय स्वाहा। उदग् दिशि। ये भूताः प्रचरंति दिवा नक्तं बलिमिच्छंतो वितुद प्रेष्याः। तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्ददातु स्वाहा ॥ इति दिवा। नक्तं बलिमिच्छंत इति नक्तं। नमो रुद्राय भूमाय स्वाहा ॥ इति ॥ इति बलिहरणांतं कृत्वा। प्रक्षालित पाणिपादोप आचम्य पंचमहायज्ञान् वैश्वदेवाहुति हुताग्नौ कुर्यात् ॥ यथा। **देवयज्ञेन यक्ष्ये।** विद्युदसि विद्यमे पाप्मान मृतात्सत्यमुपैमि। अप उपस्पृश्य। अदितेनु मन्यस्वेत्यादिभिः परिषिच्य। देवेभ्यः स्वाहा देवेभ्य इदं। इत्यन्नमाज्यं समिधं वा वैश्वदेवाहुति हुताग्नौ हुत्वा। ॐ भूः स्वाहा अग्नय इदं। ॐ भुवः स्वाहा वायव इदं। ओ गुँ सुवः स्वाहा सूर्यायेदं। ॐ भूर्भुवः सुवः स्वाहा प्रजापतय इदं। अदितेन्व मगुँस्थाः। अनुम ०। सरस्व ०। देवस ०। इति परिषिच्य। वृष्टिरसिवृश्चमे पाप्मानमृतात्सत्यमुपागां। शिरश्चक्षुषीनासिके श्रोत्रे हृदयमालभते। इत्यपः स्पृष्ट्वा आचमेदिति देवयज्ञः। **पितृयज्ञेन यक्ष्ये।** विद्युदसि०मि।

इत्यपः स्पृष्ट्वा । अग्नेर्दक्षिणतो दक्षिणाग्रेषु दर्भेषु तूष्णीमपसव्यं परिषिच्य अंगुष्ठतर्जन्योंतरालेन बलिहरण शेषेण पितृभ्यः स्वधास्तु । इति भूमौ निधाय । पितृभ्य इदं । पुनः अदितेन्वमगुँस्था इति अपसव्यं अग्नेर्दक्षिणतः परिषिच्य वृष्टिरसि०गां । यज्ञोपवीत्यप आचम्य । एष पितृयज्ञः । **भूतयज्ञेन यक्ष्ये ।** विद्युदसि ० । ०प्रदक्षिणं परिषिच्य । भूतेभ्यो नम इत्यन्नं फलं पुष्पं वा दत्वा भूतेभ्य इदं । वृष्टिरसीत्यादि । आचमनं कुर्यात् । इति भूतयज्ञः । **मनुष्ययज्ञेन यक्ष्ये ।** विद्युदसि० । ०परिषिच्य मनुष्येभ्यो हंता । इत्यन्नं ददाति भूमौ वा निधाय । वृष्टिरसीत्यादि । अप उपस्पृश्य । ततो बल्यव-शिष्ठमन्नं किंचिद्गृहीत्वा बहिर्गत्वा भूमौ दंडाकारेण जलं निक्षिप्य । द्वौ श्वानौ श्याम शबलौ वैवस्वतकुलोद्भवौ । ताभ्यां बलिं प्रदास्यामि स्यातामेतावहिंसकौ ॥ ऐंद्रवारुण वायव्य याम्यां नैर्ऋतिकास्तथा । ते काका प्रतिगृण्हंतु भूमौ पिंडं मयार्पितं ॥ इति हस्तस्थमन्नं भूमौ निधाय । पादौ प्रक्षाल्याचम्य । गोदोहन मात्रकालमतिथिं प्रतीक्ष्य तस्मै भोजनं शाकं वा दद्यात् ॥ एष मनुष्ययज्ञः ॥ **अथ वेदादीनामध्ययनं ।** अग्नेः पश्चाद्दर्भेषु आसीनो दर्भान्धारयमाणः प्राणा-नायम्य त्रिराचम्य सावित्रीमपरिकत्वो दशवारं वाजपित्वा । अथ वेदादींश्च-तुरः । अग्निर्मूर्धाभुवः । यद्देवादेवहेडन मित्यच्छिद्रोनुवाकः । कूष्मांडानि सानु षंगानि । नमो ब्रह्मण इति त्रिरनूच्य । अप उपस्पृश्य । इदं वैश्वदेवानंतरं पापक्षयार्थं नित्यमधीयीत । **ब्रह्मयज्ञः ।** आदिता इति स ग्रामाद्बहिरुदितः । अस्मिन्समये अत्र एव पूर्वोक्तप्रकारेण पूर्वमकृतं श्चेत् तं कुर्यात् । ( समाचम्य यजुः शाखीदं यजुः शाखिनां न तु अन्येषाम् यजुःशाखिनः तथा अन्यशाखिनोपि तर्पणं तु द्वितीयभागे एव कुर्युः । ) ततः । ॐ जुषस्वनः ० । अदितेन्वमगुँस्थाः इत्यादि परिषिच्य । यत्ते अग्ने ० मयि मेधां०इत्युपस्थाय । अथोपविश्योपतिष्ठते । मानस्तोके० । इति । प्रागुत्तरतो वा भस्म गृहीत्वा । ओजोसी० अनामिकया स्पृष्ट्वा । श्रद्धां मेधां इत्याशिषं

प्रार्थ्य । गोत्रेणाभिवाद्य । यस्य स्मृत्या च नामोक्त्या० अच्युतं । इत्युक्त्वा द्विराचम्य । अनेन वैश्वदेव होम कर्मणा श्रीपरमेश्वरः प्रीयताम् । ॐ आयंते योनि ऋत्वियो० । इत्यग्निं पालाशाश्वत्थखादिरौ दुंबरीषु वा समारोपणं कुर्यात् । इति वैश्वदेव प्रयोगः ।

---

**अग्निविच्छेदप्रायश्चित्तम् ।** प्रमादात् आशौचादिकारणेन वा पंच-महायज्ञेषु एकस्यापि अकरणे अग्नि (ओपासनाग्निरित्यादि) विच्छेदे बहूनांच होमानांविच्छेदे एवं प्रायश्चित्तं । एकाहं अकरेण मनस्वत्याहुतिः प्रायश्चित्तमस्ति । द्व्यहं त्र्यहं वापि अकरणे तंतुं तन्वन्नुद्बुद्ध्यस्वाग्ने त्रयस्त्रिंगुँ शत्तंतव इति हुत्वा इमं मे वरुण तत्वायामि त्वन्नो अग्ने सत्वन्नो अग्न इति जपेत् । एवं आदशरात्रं ॥ अतः परं विच्छेदे । अग्नेऽभ्यावर्तिन्नग्ने अंगिरः पुनरूर्जासि हरय्येति हुत्वा । अग्नये तंतुमते चरुं निर्वपेत् ॥ यथा । औपासनाग्निं प्रतिष्ठाप्य दशरात्रादूर्ध्वं पंचमहायज्ञविच्छित्ति प्रायश्चित्तार्थं तंतुमर्ता स्थालीपाकं करिष्ये । आघारवत्तंत्रमित्यादि पचनोनामाग्निः अग्नि स्तंतुमान्देवता इत्यादि संकल्प्य चरुश्रपणांतं कृत्वापकाज्जुहोति । त्वन्नंतंतु-रिति पुरोनुवाक्या स्वयंकृण्वान इति याज्या ॥ त्वन्नस्तंतुरुनसेतुरग्ने । त्वंपंथा भवसि देवयानः । त्वयाग्नेपृष्टं वयमारुहेम ॥ अथादेवैः सधमादं मदेमोगुँ स्वयं कृण्वानः सुभगमप्रयावं ॥ तिग्म शृंगोवृषभः शोशुचानः ॥ प्रत्नगुँ सधस्थमनपश्यमानः । आतंतुमग्निर्दिव्यं ततान स्वाहा ॥ अग्नये तंतुमत इदं ॥ एवं ॥ बुद्ध्या (इच्छया) वैश्वदेवाकरणे । वैश्वदेवेत्वकृते अति थावागते वैश्वदेवार्थमन्नमुद्धृत्य भिक्षां दद्यात् । वैश्वदेवाकरणदोषं भिक्षुः परि-हरति ॥ यतीच ब्रह्मचारीच विद्यार्थी गुरुपोषकः । अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ॥

---

ततः गृहमागतमतिथिं संतोषयेत् । पंचमेभागे भोजनं कुर्यात् ।

## (११) भोजन विधिः ।

( ब्राह्मणानामनुकरण प्रकारेण अयं प्रयोगः असमग्र एव प्रदत्तः )

भूर्भुवः सुवरोमिति तत्रन्यस्तमन्नं व्याहृतिपूर्वं गायत्र्या प्रोक्ष्य । सत्यं-त्वर्तेन परिषिंचामीति दिवा । ऋतंत्वासत्येन परिषिंचामीति रात्रौ । इति जलेन प्रदक्षिणं परिषिच्य । अंतश्चरति भूतेषु गुहायां सर्वतोमुखः । त्वं यज्ञस्त्वं वषट्कार स्त्वं विष्णुः पुरुषः परः । इत्यभिमंत्र्य । दक्षिणतो भूमौ दंड-कारेण जलं दत्वा । चित्राय स्वाहा । चित्रगुप्ताय स्वाहा । यमाय स्वाहा । यमधर्मराजाय स्वाहा । इत्यन्नेन बलिं दत्वा । चित्रादिभ्यो नमस्तृप्तिरस्त्विति तदुपरि जलं दत्वा । तद्बलिं एकत्र संस्थाप्य हस्तं प्रक्षाल्य । सव्येन हस्तेन पात्रममुंचन् दक्षिणेन हस्तेन जलमादाय अमृतोप स्तरणमसी स्वाहेति निः शब्दं जलं पीत्वा । प्राणाय स्वाहा प्राणायेदं । अपानाय स्वाहा अपाना येदं । व्यानाय स्वाहा व्यानायेदं । उदानाय स्वाहा उदानायेदं । समानाय स्वाहा समानायेदं । ब्रह्मणे स्वाहा ब्रह्मण इदं । एवं प्राणाहुतिः ग्राह्या । भुंजीत । भोजनांते जलमादाय । अमृता पिधानमसि स्वाहा इति प्राश्य । इति भोजनविधिः ॥

भोजनानंतरं तांबूल भक्षणं कुर्यात् । इतिहास पुराणानि धर्मशास्त्राणि चाभ्यसेत् । वृथा विवादवाक्यानि परिवादांश्च वर्जयेत् । इति षष्ठसप्तमभागौ नीत्वा । अष्टमे लोकवार्तातु बहिः संध्या ततः पुनरिति । एवं अष्टमभागे सायं संध्यां कुर्यात् । सायं संध्यानंतरं अग्निकार्यमौपासनं वा कुर्यात् । ततः प्रातरुक्तप्रकारेण वैश्वदेव बलिहरणं च कृत्वा पंचोपचारैः देवमभ्यर्चयेत् । ततो अतिथ्यादि परिवृतो भुंजीत ।

## (१२) सायं संध्या ।

आचमनविधिः । अंगुष्ठाग्रंसमाकुंच्य मध्यमा मध्यपर्वणि । संहतांगुलिभिस्तस्य तद्गोकर्णं प्रचक्षते ॥ गोकर्णाकृति हस्तेनमाषमग्नजलं पिबेत् । तन्यूनमतिरिक्तं चेत्सुरापान समं भवेत् ॥ गोकर्णाकृति हस्तेन माषमग्नं जलं गृहीत्वांगुष्ठमूलेन ब्रह्मतीर्थेन हृदयंगमं ॐ ऋग्वे० हा । यजु० हा । साम० हा । एवं त्रिवारं जलं पिबेत् । द्विराचम्य इत्यत्र पुनः त्रिवारं जलं पिबेत् । सर्वकर्मसु अयमेव आचमनविधिः ।

अष्टमभागे सायं संध्यां कुर्यात् । [ आचम्य ] प्राणानायम्य ममोपात्त दुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सायं संध्यामुपासिष्ये । आपोहिष्ठेति मार्जयित्वा । ॐ अग्निश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षंतां । यदह्ना पापमकार्षं । मनसा वाचाहस्ताभ्यां । पद्भ्यामुदरेण शिश्ना । अहस्तदवलुंपतु । यत्किंच दुरितं मयि । इदमहं माममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा । इति जलं प्राश्य । द्विराचम्य । पूर्ववद्द्वात्रिंशन्मार्जनं कृत्वा । सूर्याभिमुखो भूत्वा ( अर्घ्यकाले एव पश्चिमाभिमुखः भवेत् ) आसीन एव अंजलि जले आत्मनस्तेजः संयोज्य तज्जलं गायत्र्याभिमंत्र्य तं भूमौ क्षिपेत् । ततः आत्मनस्तेजः आकृष्य मूलाधारे संस्थापयेत् । एवमर्घ्यत्रयं दत्वा । चतुर्थार्घ्यं तु गायत्र्या सप्तव्याहृति संपुटं कालातिक्रमश्चेत् दद्यात् । सर्वं प्रातः कालवन्मंत्रमुक्त्वा दद्यात् । ततः असावादित्यो ब्रह्मेति जलहस्तः प्रदक्षिणं कुर्यात् । अप उपस्पृश्य अथ दर्भेषु पूर्वाभिमुखः उपविश्य दर्भान्धारयमाणः अस्त्रोपसंहारं कुर्यात् । अस्य श्री अस्त्रोपसंहार महामंत्रस्य विष्णुर्ऋषिः त्रिष्टुपछंदः सवितादेवता । सोहमर्कः० । आत्मज्योति० । आवाय० । यया० । औ० । संवर्तोसि । पा० । उत्तिष्ठदेवि गंतव्यमित्यादि गायत्रीजपांतं सर्वं पूर्ववत्कृत्वा । ततः गायत्रीं जपेत् । गायत्रीजपसमये आसीनः पूर्ववत् यथाशक्ति जपेत् । जपानुष्ठान लक्षणं । शौनकः । कृत्वोत्तानौ करौ प्रातः सायं चाधो-

मुखौ द्विजः । मध्ये स्कंधकराभ्यां तु जप एव मुदाहृतः ॥ प्रातर्नाभौकरौ कृत्वा मध्याह्ने हृदि संस्थितौ । सायमास्य समौ कुर्या ज्जपलक्षणमीरितं ॥ अन्यत्र । प्रातस्संध्यां सनक्षत्रां तिष्ठन्नासूर्यदर्शनात् । पश्चिमांतु समासीनो जपेदातारदर्शनात् ॥ तथा मध्यमसंध्यायामासीनः प्राङ्मुखो जपेत् । ध्यायेत्तु मनसामंत्रं० दिति ॥ गायत्री जपानंतरं उत्थाय पश्चिमाभिमुखः करौ मुकुलितौ कृत्वा वरुण मुपतिष्ठते । ( हस्ताभ्यां स्वस्तिकं कृत्वा प्रातस्तिष्ठेत् दिवाकरं । मध्याह्ने च ऋजू बाहू सायं मूकयितौ करौ ॥ ) अथ मंत्रः । इमम्मे वरुणश्रुधी हवमद्याच मृडय । त्वामवस्युराचके । तत्वायामि ब्रह्मणा वंदमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणे हबोध्युरुश गुँ समान आयुः प्रमोषीः ॥ इति द्वाभ्यां मंत्राभ्यां वरुण मुपस्थाय ॥ ओन्नमः संध्यायै । ( इत्यादि पूर्ववत् यथा । ) नमः प्रतीच्यै दिशे याश्च० नम उदीच्यै दिशे० नमः प्राच्यै दिशे० नमो दक्षिणायै दिशे याश्च देवता एतस्यां प्रतिवसंत्येताभ्यश्च नमो नम ऊर्ध्वायै दिशे याश्च देवता एतस्यां प्रतिवसंत्येताभ्यश्च नमो नमो धरायै दिशे० वांतरायै दिशे० नमो गंगायमुनयो० संध्यायै नमः गायत्र्यै नमः० हस्ताभ्यां स्वस्तिकं कृत्वा० । यमाय धर्मराजाय० केशवं प्रतिगच्छति । उपविश्य पूर्वाभिमुख आचम्य पूर्ववत् अष्टक्षरी पंचाक्षरी जपं कुर्यात् । आचम्य । [ अनेन सायं संध्यावंदनकर्मणा श्रीपरमेश्वरः प्रीयताम् । ] इति सायं संध्या ॥



**अस्मत्पुस्तकेन प्रयोजनम् ।** प्रयोगमालानामधेययोग्यप्रयोगग्रंथस्य आह्निक प्रयोगात् गृहीतानि बहून्याह्निक कार्याणि अस्मत्पुस्तके संति । यानि कार्याणि सामान्यब्राह्मणैः सुलभानि ( सुखेन लभ्यानि ) यानि च तैः अहरहः कृताः भवंति तानि अत्र संति । एतत्कार्याणि ब्राह्मणैः सुकराणि । एतत्कार्येषु एकं विना अन्यसर्वाण्येतत्कार्याण्युद्दिश्य प्रयोगमालाह्निक प्रयोगात्

योग्यप्रयोगाः सकला गृहीत्वा अस्मत्पुस्तके दत्ताः । प्रयोगाणां च कठिणप्रसंगाः प्रायःसर्वत्र स्पष्टीकृताः। अस्मत्पुस्तकस्य एतत्कार्याण्यु द्दिश्य प्रयोगमालाह्निक प्रयोगस्थवचनानि अत्र एवं नियुक्तानि । (१) प्रयोगमालाह्निक प्रयोगस्थेभ्यः प्रातः संध्यायाः प्रयोगाचरणस्य अभिप्रेतवचनेभ्यः काल निर्णयवचनानि अकरण दोषकथन वचनानि च विना अन्यसर्वाणां उपरिनिर्दिष्ठा भिप्रेत वचनानां तात्पर्यमत्रास्ति । माध्याह्नसंध्यायाः सायं संध्यायाश्च एवमेव क्रमः । (२) अग्निकार्याभिप्रेत वचनानि प्रयोगे एव न संति । (३) प्रयोगस्थेभ्यः औपासनस्य प्रयोगाचरणस्य अभिप्रेतवचनेभ्यः कालनिर्णय वचनानि अकरण दोषकथन वचनानि कुंडलक्षण वचनानि च विना अन्यसर्वाणां उपरिनिर्दिष्ठाभिप्रेतवचनानां तात्पर्यमत्रास्ति । एवं भवेत् । औपासनाग्निं स्थंडिले यः सर्वदा रक्षति स एव कुंडस्य उपयोगं करोति । (४) ब्रह्मयज्ञे तत्प्रयोगाचरणस्य प्रकारांतरं भवेदिति मत्वा प्रकारांतरवर्णनपराणां वाक्यानां तात्पर्यं अस्माभिः अत्र न दत्तम् । (५) प्रयोगस्थेभ्यः नित्यतर्पणस्य प्रयोगाचरणस्य अभिप्रेतवचनेभ्यः कतिपयवचनानां तात्पर्यमत्रास्ति । खड्गपात्रतिलैः उपयोगसंबंधस्य वचनानां तात्पर्यं न दत्तं । केषुचिद्दिवसेषु तिलनिषेधः नित्यतर्पणेऽस्ति । नित्यतर्पणं एकेन एव पाणिना कुर्यात् । नतु उभयेन । उभयेन इति यत्पूर्वं कथितं तन्न शुद्धम् । प्रयोग कारपद्धति प्रकारेण ब्रह्मचारी गृहस्थो वा नित्यतर्पणं द्वितीयभागे एव कुर्यात् । नित्यतर्पणविधिः विस्तरतः दत्तः । कठिण पितृशब्दानां भाषांतरमप्यस्ति । (६) नित्यस्नानस्य विधिः न दत्तो अस्माभिः । एतत्कार्यं ब्राह्मणैः न सुकरं । किंतु नित्यस्नान संबंधस्य दुस्तरवचनानां तात्पर्यमत्रास्ति । (७) पंचायतन पूजाभिप्रेतवचनानि समग्राणि संति । (८) प्रयोगमालाह्निक प्रयोगस्थेभ्यः वैश्वदेवप्रयोगस्य प्रयोगाचरणस्य सर्वाभिप्रेतवचनानां तात्पर्यमत्रास्ति । एवं अस्मल्लिखिताह्निक कार्याण्युद्दिश्य आह्निक प्रयोगस्थेभ्यः एतत्कार्याणामाचरणाभिप्रेतवचनेभ्यः साधारणो प्रयोगयुक्त वचनानां तात्पर्यं अत्र नास्ति । संध्या-

दीनां केषांचित् कर्मणां कालनिर्णयः केषांचित्कर्मणां अकरण दोषकथनं औपासन कुंडलक्षणं च एते साधारणोपयोग युक्त विषयाः। ब्राह्मणास्तान् जानंति एव प्रयोगमालायां च ते संति। किंतु नित्यतर्पणे खड्गपात्रतिलैः उपयोग संबंधस्य वचनानां तात्पर्यं कठिणम्। आह्निकप्रयोगरचना भिप्रेत वचनानि 'प्रयोगकार एव गृहीत्वा स्वप्रयोगान् अरचयत्। अतः तान्युद्दिश्य अस्माकं कर्तव्यता नास्ति।

अस्मत्पुस्तके कानिचित्कार्याणि समग्रकरणे योग्यानि। त्रयाणां कालानां संध्याः कालद्वयस्य अग्निकार्ये कालद्वयस्य औपासन प्रयोगे ब्रह्मयज्ञः पंचायतनपूजा कालद्वयस्य वैश्वदेव प्रयोगेच। एतानि कार्याणि योग्यानि। तेषाम खिलाः प्रयोगाः प्रयोगाचरणस्य च उपयोगयुक्त वचनानां तात्पर्यमत्र संति। किंतु ब्राह्मणाः अष्टभागानां उपरिनिर्दिष्टकर्मणां च कालान् जानीयुः। प्रायः ते तान् जानंति एव। तेषां कालाः अस्माभिर्न दत्ताः। कस्यचित्कर्मणः अकरण दोषकथनं तत्कर्मणि प्रवृत्तिं उत्पादयति तत्कर्मणश्च योग्यतां श्रेष्ठत्वं च दर्शयति। किंतु तस्य योग्यतां श्रेष्ठत्वं च न यच्छति। नित्यतर्पण भोजन विधिश्च विपुलकरणाय योग्ये। अतः अस्मत्पुस्तके लिखितानां अह्निक कार्याणां आचरणेन अकरणदोषप्राप्तिः न संभवति। अकरणं नामन समग्र करणं। किमपि न करणमित्यर्थः। अतः अस्मत्पुस्तकेन आह्निककर्तुः अतीव प्रयोजनमस्ति।



॥ पुस्तकसमाप्तिः ॥

